THE

PRINCESS OF WALES
SARASVATI BHAVANA TEXTS

*No. 72*
*(A,B)*

THE

# BHAKTINIRṆAYA
# &
# NĀMA-MĀHĀTMYA



IENT SANSKRIT LIBRARY,
BENARES

**Annas 10.**

**Saleable at half ... printed price.**

THE

PRINCESS OF WALES

**SARASVATI BHAVANA TEXTS**

**No. 72**

(*A*,*B*)



EDITED BY

MANGAL DEVA SHASTRI



THE

# BHAKTINIRṆAYA
# &
# NĀMA-MĀHĀTMYA



PRINTED BY MR. H. P. DUTT
AT THE EUREKA PRINTING WORKS,
BENARES CITY.

**1937**




Saleable at half of the printed price.

श्रीः ।

श्रीमदनन्तदेवविरचितः

# भक्तिनिर्णयः

तथा

श्रीमदाश्रमस्वामिविरचितं

वैष्णवकण्ठाभरणीयं

# नाममाहात्म्यम्

---

काशिकराजकीयपाठशालीयपुराणेतिहासाध्यापकेन
व्याकरणाचार्यमीमांसातीर्थफडकेकुलजेनानन्तशास्त्रिणा संशोधिते ।





Edited with Introduction by

**Ananta Shastri Phadake Vyakaranacharya,**
**Professor, Sanskrit College, Benares.**

श्रीः ।

# किञ्चित्प्रास्ताविकम् ।

अथायं मुद्राप्य प्रकाश्यते भक्तिनिर्णयनामा विद्वद्वरदेवोपनामकानन्तदेवविरचितः प्रबन्धः । प्रकृतग्रन्थप्रतिपाद्येयं भक्तिः काण्डत्रयात्मकेनापौरुषेयेण भगवतो निश्वासभूतेन शब्दराशिना वेदेन सामान्यविशेषरूपेणोपासनान्तर्गतत्वेन किञ्चिदंशेन प्रदर्शितापि, नारदशाण्डिल्यादिमहर्षिभिः सूत्ररूपेण सूत्रितापि, स्वप्नेश्वरप्रभृतिभिर्भाष्यकारैर्भाषितापि,वेदव्यासेन पुराणसागरतः सागरायिताप्यनेकसंसारदुःखदुःखितानां वेदादिग्रन्थसागरमन्थनपूर्वकभक्तिसुधास्वीकारं कर्तुमसमर्थानां कृते वेदपुराणादि-सागरमन्थनतत्परस्य भक्तिसुधानिष्कासनसमर्थस्य बुद्धिरूपमन्थनदण्डचालकस्य कस्यचित्पुरुषधौरेयस्यापेक्षावशिष्टैवासीत् । सा च पुरुषधौरेयेण विद्वद्वरिष्ठेन बुद्धिगरिष्ठेन श्रीमदन्तदेवेन प्रकृतग्रन्थामृतं स्वबुद्धिरूपमन्थनदण्डेन वेदादिग्रन्थसागरं प्रमथ्य निष्कास्य च संपूरितेति महदुपकृतं ग्रन्थकारेण करालकलिकालकवलितजर्जरितमतीनां विश्वेषां जनानामुपरि । प्रकरणद्वयात्मकेऽस्मिन् ग्रन्थे प्रथमप्रकरणे ग्रन्थकारेण भक्त्युद्देश्यभूतपरमेश्वरस्वरूपमनेकमतावलम्बिमतेन प्रतिपाद्य भक्तेः साधनभक्तिफलभक्तिभेदेन द्वैविध्यं प्रदर्श्य पुनः साधनभक्तेः संकीर्तनादिरूपेणानेकप्रकारकत्वप्रतिपादनपुरःसरं यज्ञादीनां कलियुगे सम्यक्तयाऽनुष्ठातुमशक्यतया संकीर्तनभक्तेर्गृहस्थादेरिव मुमुक्षूणामपि कर्तव्यता प्रतिपादिता । तत्रापि कीर्तनादेर्यज्ञाद्यनङ्गत्वमनेकफलसाधकत्वं च महता प्रयत्नेन प्रतिपाद्येष्टदेवताभजन-दान-परिचरण-दास्य-स्मरणकीर्तन-चरणोदकग्रहण-पादसेवन-स्वीयसर्वस्वसमर्पण-श्रवण-आत्मनिवेदनादिप्रतिपादकानि श्रुतिवाक्यानि प्रदर्श्य स्मृतिपुराणवचनैरपि भक्तिरेव

कर्तव्येत्यनेकशङ्कापङ्कनिरसनपुरःसरं स्वाभिप्रायो नानायुक्तिविलसितः प्रकाशितः। द्वितीये भक्तिफलप्रकरणे प्रथमतो भक्तेर्मोक्षसाधनत्वप्रणालिका निर्दिष्टा ततः तावत्कर्माण्यादिवचननिचयेन ज्ञानाङ्गत्वं यथा कर्मणां, तथा भक्त्यङ्गत्वमपीति प्रतिपाद्यान्यीयमतेन मोक्षार्थं भक्तेर्वेदान्तश्रवणेन सह समुच्चयपक्षं संसाध्य तस्याः सर्वपातकनिवृत्त्याद्यनेकफलकत्वं च निर्दिष्टम्। पङ्कसंसर्गरहितदर्पणतले स्वस्वरूपमिवास्मिन् महता प्रयत्नेन निस्सारितशङ्कापङ्कनिचये ग्रन्थे भक्तेः सर्वाङ्गस्वरूपं सम्यक्तया ज्ञायते। अस्तु।

अयं ग्रन्थकारो निजेन जन्मना कदा भूमण्डलं मण्डितवानिति देवकुलवंशेतिवृत्ते लब्धेऽपि सम्यक्तया निर्णेतुं न पार्यते। यतो प्रसिद्धदेवकुले द्वावापदेवौ द्वावनन्तदेवौ चोत्पन्नौ। अपि चापदेवसुतोऽनन्तदेवस्तत्सुत आपदेवः, तत्सुतश्च स्मृतिकौस्तुभादिकर्तानन्तदेवः। स्मृतिकौस्तुभे देवकुलविषयकाः श्लोका उपलभ्यन्ते तेचैते—

आसीद् गोदावरीतीरे वेदवेदिसमन्वितः।
श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः॥
तत्सुतस्तद्‌गुणैर्युक्तः सर्वशास्त्रार्थतत्ववित्।
आपदेवोऽभवद्दैवात् प्राप यस्सकलान् मनून्॥
मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतः
विद्यादानविभावितोत्तमयशा आसीत् तदीयात्मजः।
यस्यानन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनावादि च वादिनां श्रुतिशिरस्सिद्धान्ततत्त्वं मुदे॥
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदः सततम्।
मीमांसाद्वयनयवित् तनयस्तस्यापदेवोऽभूत॥
तस्यात्मजं वैदिकशास्त्रविज्ञं
सन्तोऽसकृत्प्राहुरनन्तदेवम्। इति।

एवंच प्रथमापदेवपुत्रानन्तदेवेन निर्मितोऽयं ग्रन्थ उत द्वितीयापदेवसुतेन मीमांसाकौस्तुभादिनिर्माणपरेण द्वितीयानन्तदेवेन

निर्मित इति संदिग्धमेव। अथ ग्रन्थस्थविषयदर्शनेन यो मीमांसाशास्त्रवेत्ता सम्यक्परिशीलितभक्तिशास्त्रः स एवास्य ग्रन्थस्य कर्तेति वक्तुं शक्यत्वेऽपि न निर्णेतुं शक्यम्, यतो द्वयोरपि मीमांसाशास्त्रपारङ्गतत्वं भक्तिविषयकग्रन्थकर्तृत्वं च। यतो श्रीकृष्णभक्तिचन्द्रिका-मनोरञ्जनाभिधानहरिभक्तिसंज्ञकं नाटकद्वयं चानन्तदेवकर्तृकममुद्रितमुपलभ्यते तदेकविषयकमेकफलकं च दृष्ट्वा तयोरेकानन्तदेवकर्तृकत्वापेक्षयानेकानन्तदेवकर्तृकत्वमेवोचितं प्रतिभाति। एवं स्थितेऽस्मिन्विषये प्रथमानन्तदेवकृत एवायं ग्रन्थ इति श्रीकृष्णविषयकमङ्गलाचरणकर्तृत्वेनानुमीयते,यतो 'मधुरिपोः सेवासु नित्योद्यतः' इति प्रथमानन्तदेवविषय एव स्पष्टमुपलभ्यते। एवं चानेकप्रमाणप्रमाणितायाः पण्डितराजजगन्नाथगुरुखण्डदेवस्य वैक्रमसप्तदशशतकीयस्थितेः पूर्वं न्यायप्रकाशकर्तुरापदेवस्य स्थितिर्यतो खण्डदेवेन रचितायां भाट्टदीपिकायां न्यायप्रकाशोक्तविषयप्रतिपादनपद्धतेः खण्डनं कृतमुपलभ्यते। एवं च न्यायप्रकाशकर्तुरापदेवतोऽपि पूर्वं प्रकृतग्रन्थकर्तुः प्रथमानन्तदेवस्य स्थितिरेवं च प्रायो विक्रमीयसप्तदशशतकप्रथमपादे स्थितिरिति कथंचिद्वक्तुं पार्यत इति कथयन्ति।

अन्ये तु पूर्वोक्तं नैतत्सम्यम्, द्वितीयानन्तदेवस्यैवायं ग्रन्थः, यतः क्वचित् प्रामाणिकग्रन्थेषु भक्तिनिर्णयस्य तत्कृतत्वेनैवोपलब्धेः। द्वितीयानन्तदेवस्य वृद्धप्रपितामहेन प्रसिद्धसत्पुरुषैकनाथेन रचितैकनाथीभागवतग्रन्थे स्वीयग्रन्थसमाप्तिकालस्योल्लेखः कृतो दरीदृश्यते—

वाराणसी महामुक्तिक्षेत्र। विक्रमशक वृषसंवत्सर।
शके सोळाशे तिसोत्तर। टीका एकाकार जनार्दनकृपा॥
स्वदेशीचा शक संवत्सर। दण्डकारण्य श्रीरामक्षेत्र।
प्रतिष्ठान गोदातीर। तेथील उच्चार तो ऐका॥

शालिवाहनशक वैभव । संख्या चौदाशे पंचाएणव ।
श्रीमुख संवत्सराचे नाव । टीका अपूर्व तै जाहली ॥

एवं च द्वितीयानन्तदेववृद्धप्रपितामहस्यैकनाथस्य कालः विक्रमीयत्रिंशकधिषोडशशतमितो निश्चित एव । एवं वंशप्रवर्धक-प्रतिपुरुषं पञ्चविंशतिवर्षसंकलनपद्धत्या द्वितीयानन्तदेवप्रादुर्भाव-कालो वैक्रमाष्टादशशतकप्रारम्भमितो लभ्यते । तथा स्मृतिकौ-स्तुभादिग्रन्थकारयितुरल्मोडासंज्ञकपर्वतीयदेशपालकस्य द्वितीया-नन्तदेवस्याश्रयदातुर्बाजबहादुरचन्द्रदेवस्यापि स्थितिकालः शालि-वाहनशकीयनवत्युत्तरपञ्चदशशतकपरिमितो निश्चित एव । यतस्तेन द्वितीयसरस्वतीसंज्ञकपण्डितप्रवराय भूप्रदेशः प्रदत्त इति सूचकस्य पण्डितप्रवरकाशीनिवासिनः पायगुण्डे इत्युपनाम्नः कुले ताम्रपत्रस्य विद्यमानत्वात् । एवं चानन्तदेवस्य वैक्रमपञ्चविंश-त्युत्तरसप्तदशशतकपरिमितः स्थितिकालः सम्यक्तया सुसिद्धो भवति । किं च प्रकृतग्रन्थस्थेन लेखकबुधजगन्नाथनामकेन 'शर-नवतिथिमितशाके ( १५६५ शालिवाहनशकः संवत् १७३० ) इति कालसूचकेन लिखितश्लोकेनापि संवाद्यतेऽयं कालः । एवं च द्वितीया-नन्तदेवप्रादुर्भावकालस्त्वेतदनुरोधेन प्रायो वैक्रमाष्टादशशतकप्रारम्भ इति निश्चीयत इति प्रवदन्ति । तत्त्वमालोचनीयं विद्वद्वरैः ।

अनेन कृता ग्रन्थाः स्मृत्यादिकौस्तुभा द्वादश । तथा मथुरा-सेतु—प्रायश्चित्तप्रदीपिका—अन्त्येष्टिपद्धति—भगवद्भक्तिनिर्णय—दत्तकपुत्रविधानऋत्विग्वरणनिर्णयप्रभृतय उपलभ्यन्ते ।

भक्तिशास्त्रीयप्राचीनपुस्तकान्वेषणं कुर्वता मया श्रीराम-तारकमठसंज्ञकयतिवरसंस्थायामेकमेवाशुद्धिबहुलं पुस्तकमुपलब्धं याचितं च तत्संस्थास्थगुरुपदाधिष्ठितानां संप्रति परमसायुज्यं प्राप्तानां श्रीयतिवरपुरुषोत्तमचरणानां तथा मठस्थसर्वकार्यनिर्वाह-

कानां पुस्तकालयाध्यक्षाणां श्रीश्रीधरस्वामिचरणां निकटे,प्रदत्तं च तैः प्रत्यर्पणसहितमुद्रापणार्थम् । तत् प्रतिलिपिकरणपूर्वकं यथामति श्रीपरमेश्वरकृपया च संशोध्य भक्तिशास्त्रादिरसिकविद्वज्जनानां मनोविनोदार्थं संप्रकाश्यते । श्रीरामतारकमठस्थपरमपदप्राप्तश्री-परमहंसगुरुस्वामिनां पुस्तकप्रदातृश्रीधरस्वामिचरणानां तथा प्रथम-तोमां कार्यकरणे प्रवर्तकानां प्रिन्सिपलमहामहोपाध्यायश्रीगोपीनाथ-कविराजमहोदयानां ततस्तत्स्थानापन्नानां तथैव मां प्रकृतकर्मणि प्रोत्साहयतां डॉ० श्रीमङ्गलदेवशास्त्रिडी०फिल्महोदयानाँ च कृतज्ञतां प्रकाश्यात्र च जातामनेककारणतोऽशुद्धिं संशुद्धिपत्राधारेण संशोध्य गुणान् हंसक्षीरन्यायेन स्वीकुर्वन्तु विद्वांस इति संप्रार्थयते—

गवर्नमेंट संस्कृत कॉलेज
कार्तिकशुद्धचतुर्थी
संवत् १९९४, काशी ।

श्रीअनन्तशास्त्री फडके
व्याकरणाचार्यो मीमांसातीर्थश्च ।



# भक्तिनिर्णयविषयसूचीपत्रम् ।

श्री १०८ भैरवाय नमः ।

श्रीमदनन्तदेवविरचितः

# भक्तिनिर्णयः ।



स जयति गोकुलसदनः ।
सरसिजवदनः शिशुर्घनश्यामः ॥
पदनखरुचिजितमदनः ।
कृतखलकदनः कृपाजलधिः ॥ १ ॥
अभ्यस्य विद्या धनमर्जयन्तु ।
ख्यातिं च मूर्खान्प्रति साधयन्तु ॥
वयं तु गोविन्दपदारविन्द- ।
द्वयं सदानन्दमयं भजामः ॥ २ ॥
इह खलु कर्मकृतानाम् ।
विषयसुखानां विपाकमालोक्य ॥
भगवद्भक्तिं कुर्मः ।
संसृतिदुखान्यपाकुर्मः ॥ ३ ॥

ननु कोऽसौ भगवान् यस्य भक्तिराद्रियते । उच्यते । "योऽसौ सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति" "एको दाधार भुवनानि विश्वा" "यः सर्वज्ञः सर्वविद्" "यो ब्रह्माणं विदधाति पूर्वं" "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "यो रुद्रो विश्वा भुवनानि विवेश" "अनश्नन्नन्यो अभिचाकशीति" "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति"

इत्यादिवाक्येषु पुरुषसुक्ते विष्णुसूक्ते रुद्रानुवाके चान्तर्यामिब्राह्मणादावष्टादशपुराणेषूपपुराणेषु पञ्चरात्राद्यागमेषु च निरूप्यते। यश्च नैय्यायिकादिभिर्महादार्शनिकैस्तत्तद्युक्तिकलापैः प्रतिपाद्यते। यश्चाबालगोपालाङ्गनं परमेश्वर इति प्रसिद्धः। यश्च वेदबाह्यैरप्यर्हदादिशब्दैर्निरूप्यते। यश्चैवं सर्वजनप्रसिद्धः स एव।

ननु पुराणेषु विमतिर्दृश्यते। तथाहि। केषुचिल्लिङ्गपुराणादिषु रुद्र एव जगदीश्वरो निरूप्यते। विष्णुपुराणादिषु विष्णुः, देवीपुराणादिषु देवी जगदीश्वरत्वेन निरूप्यते। न च रुद्रविष्ण्वादिशब्दैरेकमेव वस्तु निरूप्यते, ततश्च शब्दभेदमात्रं न वस्तुविरोध इति वाच्यम्। रुद्रो यत्र निरूप्यते तत्र विष्णोरुत्कृष्टत्वेन निरूप्यते। एवं विष्णुरपि रुद्रादप्युत्कृष्टत्वेन। देव्यपि तदुभयोत्कृष्टत्वेन। नचैतत्संभवति, एकस्योत्कर्षापकर्षासंभवात। न च जगदीश्वरा बहवः संभवन्ति। न च कस्यचित् पुराणस्याप्रामाण्यम्। अष्टादशपुराणानां प्रामाण्यात्। न च सर्वज्ञस्य बादरायणस्य भ्रान्तत्वं प्रतारकत्वं वा संभवति।

अत्र तार्किकाः समादधते। एक एव जगदीश्वरस्तत्तल्लीलाविग्रहोपहितो रुद्रविष्ण्वादिशब्दैर्व्यपदिश्यते। रुद्राराधनविशेषतया विष्णोरपकर्षवचनं लिङ्गपुराणादिषु। विष्ण्वाराधनविशेषतया रुद्रापकर्षवचनं विष्णुपुराणादिषु। 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुम्' इति न्यायात्। वर्णयन्ति च—

गङ्गा मूर्धनि शीतदीधितिकला मौलौ ललाटस्थले
ज्वाला हौतवही गले गरलजा लेखा सुनीलाकृतिः।
सर्वाङ्गेऽपि च दृष्टिकर्षणकरी कर्पूरकान्तिः परा
यस्याङ्केऽपि च कापि पङ्कजमुखी कस्मैचिदस्मै नमः॥१॥
यस्याङ्गे जलदद्युतिः कटितटे सौवर्णवर्णा पटी

नेत्रे फुल्लसरोरुहप्रतिमता वक्त्रे शशाङ्काकृतिः ।
कण्ठे कौस्तुभकान्तिरुज्वलतमा वक्षस्थले चोत्तमा
काप्यम्भोजमुखी पदे सुरसरित्कस्मैचिदस्मै नमः ॥२॥इति

ततश्च लीलाविग्रहभेदमात्रं न वस्तुभेदः। ततश्च न कश्चिद्दोष इति।

वेदान्तिनस्त्वखण्डमद्वितीयं चैतन्यं मायोपहितमीश्वरः। स एव सत्त्वेनोपहितो विष्णुरिति रजसोपहितो ब्रह्मेति तमसोपहितो रुद्र इति चाभिधीयते। न तु लीलाविग्रहमात्रकृतोऽयं भेदः। तथा सति प्रतिकल्पं लीलाविग्रहाणामानन्त्येन ब्रह्मविष्णुरुद्राणामानन्त्यप्रसङ्गात्। न चेष्टापत्तिः। "एको विष्णुरेको रुद्र" इत्यादिपुराणादिप्रसिद्धिविरोधात्। लीलाविग्रहानन्त्येन च "नमोऽस्त्वनन्ताय सहस्रमूर्त्तये" "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" इत्यादिव्यपदेशोपपत्तेः। अत एव रामकृष्णादयो विष्णोरवतारा इति पौराणिकी प्रसिद्धिरप्युपपद्यते। सत्त्वोपहितं-(तः) तं लीलाविग्रहमङ्गीकरोति। यश्च विष्णुपुराणे विष्णुर्लिङ्गपुराणे रुद्रो देवीपुराणे देवीत्यभिधीयते स मायोपहितं चैतन्यमेवोच्यते। ब्रह्महरिहराणां तन्मूलत्वाभिधानात्। कर्पूरगौरमेघश्यामादिलीलाविग्रहविशेषोपहिताराधने स्तवनाय चेतरेषामपकर्षाभिधानम्। 'न हि निन्दा निन्दितुं प्रवर्तते' इति न्यायात्। ततश्च सर्वज्ञः सर्वेश्वरः सर्वव्यापी सर्वाधारः सर्वहेतुरीश्वर एक एव तेषु तेषु पुराणेषु तेन तेन शब्देनाभिधीयते, तत्तद्गुणोपहितश्च ब्रह्महरिहरादिशब्दैरिति न कोऽपि विरोधः (इति समादधते)।

ततः सिद्धा 'भगवति भक्तिं कुर्म' इति प्रतिज्ञा। सा च भक्तिर्द्विधा-साधनभक्तिः फलभक्तिश्चेति। तत्र फलभक्तिरग्रे वक्ष्यते। साधनभक्तिः-संकीर्तन-श्रवण-स्मरण-पादसेवन-अर्चन-वन्दन-दास्य-आत्मनिवेदनाद्यनेकप्रकारा। तत्र यज्ञादीनां बहुवित्तव्ययायाससा

ध्यत्वाद् ध्यानादीनां चित्तैकाग्र्यसाध्यत्वात् कलियुगे च तेषामशक्यानुष्ठानत्वात्संकीर्त्तनभक्तिर्विधीयते ।

ननु तत्किं यज्ञादिफलसङ्कीर्त्तनेन लभ्यत इति ब्रूषे । ओमितिचेत् । तर्हि तत्प्रमाणं वक्तव्यम् । उच्यते

ध्यायन् कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।

यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥

इति वचनं नानापुराणेषु दृश्यमानं प्रमाणम् । तथाहि । तत्र हि ध्यानादयो न विधेया वाक्यान्तरप्राप्तत्वात् । वाक्यभेदाच्च । अत एव ध्यानादीनां कृतादयः काला अपि न विधेयाः, 'यदाप्नोति तदाप्नोति' इत्येतद्वैयर्थ्यप्रसङ्गाच्च । ध्यानादिषु यच्छब्दोपबन्धात् संकीर्तने तच्छब्दप्रयोगाच्च । अन्यथा ध्यानादीनां संकीर्त्तनान्तानामविशेषेण विधाने यत्तच्छब्दोपबन्धवैषम्यं न स्यात् ।

अत्र केचिदाहुः । अत्र वाक्ये ध्यानादीनां व्यवस्था विधीयते. तेन न वाक्यभेदः । यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति दधितक्रयोर्व्यवस्था । नन्वत्र सामान्यविशेषभावः । तेन ब्राह्मणसामान्ये विहितस्य दध्नः तक्रेण कौण्डिन्यायेति विहितेन बाधः । यथा "आहवनीये जुहोति" इति होमसामान्ये विहितस्याऽऽहवनीयस्य "पदे जुहोति" इतिपदेन बाधः । व्यवस्थात्वार्थिकी । तस्मान्नैतद् व्यवस्थापरमतोऽन्यदुदाहर्त्तव्यम् । एवं तर्हि "वार्त्रघ्नी पौर्णमास्यामनुच्येते वृधन्वती अमावास्यायाम्" इत्युदाहरणम् । अत्र ह्याज्यभागयोः क्रमेण पठितस्यानुवाक्याचतुष्टयस्याव्यवस्थया प्राप्तस्य व्यवस्थामात्रं विधीयते । वार्त्रघ्नी पौर्णमास्यामनुवाक्ये अमावास्यायां वृधन्वती इति । एवं प्रकृतवाक्ये कृतादिषु ध्यानादीनां व्यवस्थेति ।

अत्र ब्रूमः । नेदं व्यवस्थाविधायकम् । यदि कृते ध्याये-

ध्यजेद्यज्ञैस्त्रेतायामित्यादिरूपानुपूर्वी स्यान्न स्याच्च 'यदाप्नोति' इति तदा व्यवस्थाविधानं स्यात्। 'यदाप्नोति तदाप्नोति' इति ध्यानादीनां संकीर्तनान्तानां फलैक्यं प्रतीयते। न च तदपि विधेयं, वाक्यभेदप्रसङ्गात्। नाप्यनुवादः। वाक्यान्तरेणाप्राप्तत्वात्। किंच कृतादिषु ध्यानादीनां व्यवस्थाविधाने युगान्तरेषु ध्यानादीनामनुष्ठानं न स्यात्। वार्त्रघ्न्योरिवामावास्यायाम्। अतो नात्र व्यवस्थाविधानं किन्तु ध्यानादिफले संकीर्तनं विधीयते।

ननु तथापि वाक्यभेदो दुष्परिहरः, तत्तत्कालीनध्यानयज्ञार्चनजन्यफलविशेषाननेकानुद्दिश्य संकीर्तनविधानात्। प्रत्युद्देशवाक्यपरिसमाप्तेः। यथा ग्रहोद्देशेनैकत्वसंमार्गविधाने। उच्यते। तेषां फलविशेषाणामेकेन तच्छब्देनोपसंग्रहात्तदाप्नोतीत्येकोपस्थितिविषयत्वान्न वाक्यभेदः। यथा "सर्वेभ्यो दर्शपौर्णमासौ" इत्यत्रानेकेषामपि फलानामेकेन सर्वशब्देन। न च 'कृते ध्यायन्' इत्यादेर्वैयर्थ्यम्, 'तदाप्नोति' इति तच्छब्देनैवोद्देश्यसमर्पणादितिवाच्यम्। कृते ध्यायन्नित्यादेरभावे 'तदाप्नोति' इति तच्छब्दस्य तत्तत्फलविशेषोपस्थाकत्वाभावात्। सर्वनाम्नामुपस्थितवाचकत्वात्। यथा "वैश्वदेव्यामिक्षा" इत्यत्रामिक्षापदाभावे वैश्वदेवीशब्दस्य नामिक्षोपस्थापकत्वम्, तद्धितस्य "सास्य देवता" ( पा० सू० ४। २। २४ ) इति सर्वनामार्थे विहितत्वात्तस्य चोपस्थितवाचित्वात्। तदुक्तम्—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति।

न च कलिकालविधानप्रयुक्तो वाक्यभेदः। कलिविशिष्टकीर्तनविधानात्। तत्र संकीर्तनस्य कर्मत्वनिर्देश एकस्मिन्वाक्ये भाव्यद्वयसमावेशयोगः। न हि सम्भवति सङ्कीर्तनं भावयेत्तत्फलं च भावयेदिति। करणत्वनिर्देशे सेतिकर्तव्यताकस्य करणत्वनियमात्, संकीर्त्तने चेतिकर्तव्यतान्तरानुपलब्धेः

संकीर्त्तनकृतिरेवेतिकर्तव्यतेति द्योतयितुं 'संकीर्त्य' इतिक्त्वा-प्रत्ययनिर्देशः ।

अत्र केचिद्भगवद्भजनशून्या मीमांसकंमन्याः परमेश्वरसंकीर्तनाऽसहिष्णवः केवलं नरके पतिष्णवः प्रलपन्ति । संकीर्तनं नाम न कश्चिद्धर्मः श्रुतिषु स्मृतिषु वा प्रसिद्धः । विशेषतो ब्राह्मणानामग्निहोत्राद्यधिकारिणां संकीर्तनं न संभवति । 'ध्यायन् कृते' इत्यादिवाक्यं त्वर्थवादमात्रमिति । तदत्यन्तमसाधु । अर्थवादमात्रमिति कोऽर्थः । किमप्रमाणमेव, किं वा विध्येकवाक्यतामन्तरेणैवाप्रमाणम् । नाद्यः । श्रुतिस्मृतिवत् पुराणानामपि प्रामाण्यात् । 'पुराणं पञ्चमो वेदः' 'पुराणन्यायमीमांसा'इत्यादिवचनसन्दर्भैस्तन्निर्णयात् । य एव वैदिकार्थमनुतिष्ठन्ति त एवैवं स्मरन्तीति कर्तृसामान्यस्य मन्वादिस्मृतिष्विव पुराणेष्वपि तुल्यत्वाच्च, शिष्टपरिगृहीतत्वाच्च । न द्वितीयः । 'ध्यायन् कृते' इत्यादेर्विध्येकवाक्यतामन्तरेण प्रामाण्येऽर्थवादत्वोक्तिविरोधः । 'विधिनात्वेकवाक्यत्वात्' (जै०सू०१।२।७)इत्यर्थवादानां विध्येकवाक्यतानिरूपणात् । अपि च कस्मिन्नर्थे प्रामाण्यम् । यदि तावत् संकीर्तनकर्त्तव्यतायां, तर्हि संकीर्तनं कथं न धर्मः । अथ संकीर्तनमत्र विधीयत एव, 'ध्यायन् कृते'इत्यादि 'यदाप्नोति तदाप्नोति' इत्यन्तमर्थवादः । तन्न । संकीर्तनविधेः फलाकाङ्क्षत्वादार्थवादिकस्यापि फलान्वयात् । अन्यथा रात्रिसत्रविधेः "प्रतितिष्ठन्ति" इत्यर्थवादिकफलान्वयाभावप्रसङ्गः । विधेः फलाकाङ्क्षाराहित्ये विश्वजिन्न्यायोच्छेदप्रसङ्गः ।

अथ "यस्य पर्णमयी जुहूर्भवति" इत्यस्य पर्णताविधेः "न स पापं श्लोकं शृणोति" इत्यर्थवादवत्संकीर्तनविधेरयमर्थवादः । तन्न । पर्णता हि वाक्यादव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा क्रत्वङ्गम् । ततश्च तत्र फलश्रुतिरर्थवादो युक्तः । न च संकीर्तनस्य क्रत्वङ्गत्वे प्रमाणमस्ति । संकीर्तनं हि गुणकीर्तनं नामकीर्तनं च ।

तत्र नामसंकीर्त्तनस्य—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतामेति सद्यो वन्दे तमच्युतम् ॥

इति वाक्यात् कथञ्चित् क्रत्वङ्गत्वेऽपि गुणकीर्त्तनस्य तदभावात् । फलाकाङ्क्षायामार्थवादिकं फलं सम्बध्यत एव । नामसंकीर्त्तनस्यापि सत्यप्युक्तवाक्यात् क्रत्वङ्गत्वे—

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाभिरोचते नाम तत्सर्वार्थेषु योजयेत् ॥

इति वाक्येन पुरुषार्थतास्त्येव । यथा खादिरतायाः "खादिरो यूपो भवति" इति वाक्यात् क्रत्वर्थत्वेऽपि "खादिरं वीर्यकामस्य" इति वाक्येन पुरुषार्थतापि । ततश्च 'कलौ संकीर्त्त्य केशवम्' इत्यत्र संकीर्त्तनत्वेनोभयोः फलाकाङ्क्षायां 'यदाप्नोति तदाप्नोति' इति फलान्वयो घटत एव । तदयं वाक्यार्थः । कृतयुगे ध्यानेन यत्फलं त्रेतायां यज्ञानुष्ठानेन द्वापरेऽर्चनेन यदवाप्यते तत्कलौ संकीर्त्य केशवं प्राप्नुयादिति । यज्ञाश्च पशुसोमयागाः सत्रपर्यन्ताः ।

ननु कथं महायागफलं केशवसंकीर्त्तनेन लभ्यते । उच्यते । यदि तावदितिकर्त्तव्यता पृच्छ्यते तर्ह्युक्तैव संकीर्त्तनकर्मिका कृतिः । यथा ह्यनिर्दिष्टेतिकर्त्तव्यताकेषु दर्विहोमेषु तत्कृतिरेवेति कर्त्तव्यता । अथ महावाक्यफलं कथमल्पेन लभ्येतेति । तर्हि नास्ति वचनस्यातिभारः । दृश्यते हि "सत्रायावगूर्य विश्वजिता यजेत" इति फलोद्देशेन विश्वजिद्विधानम् । अयञ्च विश्वजित् कल्प्य (क्लृप्त)फलाद् विश्वजितो मासाग्निहोत्रन्यायेन भिन्न एव । किञ्च चतुर्थे वार्त्तिककारैः "सर्वेभ्यो दर्शपौर्णमासौ" इत्यत्र सर्वशब्दस्य संकोचो माभूदित्याकाशगमनादिफलोद्देशेनापि तद्विधानमाशङ्क्य 'तस्यायोग्यतयासंभवात् सर्वशब्देन ये वेदे स्वर्गकामादिशब्दोपात्ताः कामास्त एवाभिधीयन्ते' इत्युक्तम् । ततश्च "ज्योतिष्टोमेन स्वर्गकामो यजेत"

इत्ययमपि सर्वशब्देन संगृह्यते। एवं च फलतारतम्यं कथञ्चित्कल्प्येत। न च तदपि, ।सर्वश्रुतिसंकोचात्। 'अल्पेन कर्मणाऽल्पं फलं महता महत्'इति न्यायः स वचनेन बाध्यत एव। अत एव "सत्रायावगूर्य विश्वजिता" इत्यत्र तारतम्यम्। ततश्च यत्र फलविरोधो नास्ति तत्र फलतारतम्यकल्पना। यथाग्निहोत्रज्योतिष्टोमादिषु। अत एव वार्त्तिककारैरुक्तमर्थवादपादे 'तच्चैतत्समानफलेष्वग्निहोत्रादिषु' इति। यत्र वचनं विरोधि न तत्र न्यायः प्रवर्तते। अतः "सर्वेभ्यो दर्शपौर्णमासौ" इत्यत्र ज्यतिष्टोमजन्यफलभूमापि दर्शपौर्णमासतो भवति। कस्तर्हि महत्सु कर्मसु प्रवर्त्ततेति चेत्। श्रूयतां तर्हि। तच्चिकीर्षुरेव तत्र प्रवर्त्तताम्। दृश्यते हि कस्य(स्मै)चित् महदेव रोचते कस्य(स्मै)चिदल्पमेवेति। शक्त्यशक्त्यपेक्षया(वा)व्यवस्था कल्प्यताम्। दृश्यते ह्येकपापक्षयफलेषु गुरुलघुप्रायश्चित्तेषु शक्त्यशक्त्यपेक्षया व्यवस्थानिरूपणं निबन्धग्रन्थेषु। तस्मादल्पेनापि संकीर्त्तनेन यज्ञफलं पूर्णमेव भवतीति युक्तमेतत्। सर्वफलार्थतापि दर्शपौर्णमासवत् संकीर्त्तनस्य श्रूयते—

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।
अत्र संकीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते॥ इति।

वस्तुतस्तु सर्वधर्मतोऽप्युत्कृष्टफलं संकीर्तनमित्यग्रे वक्ष्यामः।

यदुक्तं विशेषतो ब्राह्मणानां संकीर्त्तनं न संभवतीति तत्परिहाराय विचारोऽयमारभ्यते। किमिदमत्रैवर्णिकाधिकार(रं वाऽ)मब्राह्मणाधिकारं वा सर्वाधिकारं वेति। तत्र केचित्पण्डितंमन्या मन्यन्ते। अत्रैवर्णिकाधिकारमिति। त्रैवर्णिकानां ब्राह्ममुहूर्त्तोपक्रमप्रदोषपरिसमापनीयनित्यकर्मव्यग्राणां संकीर्त्तने कालाभावात्। किञ्च—

ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।

अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ।

इत्यनधीतस्य नामसंकीर्त्तनेनाधीतसंपत्तिश्रवणादनधीतशूद्राधिकारत्वं निर्णीयते । अपि च—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ (भाग.१-४-२५)

इति स्त्रीशूद्रादीनामर्थे भारतनिर्माणाद्भारतस्य च पुराणमात्रोपलक्षणत्वात्संकीर्त्तनस्य च पौराणत्वात्स्त्रीशूद्राधिकारत्वं नीर्णीयते । न हि केशवसंकीर्त्तनं कुर्यादिति क्वचिद्वेदे श्रूयते । अथवा क्षत्रियादीनामध्यापनादिव्यापाराभावात् स्यात् कथंचित् संकीर्त्तनाधिकारः । ब्राह्मणानां त्वध्यापनादिव्यापृतानां न कथञ्चित्संकीर्त्तनकालो लभ्यत इति ब्राह्मणेतराधिकारं संकीर्त्तनमिति ।

अत्र ब्रूमः । एवं हि ज्योतिष्टोमाद्यनुष्ठानं च न स्यात्, ब्राह्ममुहूर्त्तमारभ्य नित्यकर्मावरुद्धत्वात्कालस्य । यदि च कथञ्चित्संकोचं सोढ्वा ज्यातिष्टोमाद्यनुष्ठानं, तुल्यमिदं संकीर्त्तनेऽपि । तस्यापि विहितत्वात् । यच्चोक्तं 'ऋग्वेद' इत्यादिवाक्याच्छूद्राधिकारत्वमिति । तन्नानिष्टं, सर्वाधिकारत्वात् । नचैतदैकान्तिकं शूद्राधिकारतासूचकं लिङ्गम् । तथाहि । येनोक्तं हरिरित्यक्षरद्वयं तेनाधीता इतिप्रत्यक्षबाधितम् । अथ प्रशंसा क्रियते, ब्राह्मणस्यापि सा भवतीति नासाधारणं शूद्रलिङ्गम् । अधीतवतापि येन ब्राह्मणेनोक्तं तेनाधीता इति ।

अथ त्वेतद्वाक्यमेवं व्याख्यायते । येनेति कर्तृसमानाधिकरणयच्छब्दयोगेन "य एवं विद्वान् पौर्णमासीं यजते" इतिवदनुवादत्वाशङ्कायामप्यपूर्वार्थत्वाद् "यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" इतिवद्विधित्वम् । न चायं सर्वोऽप्यर्थवादः, विध्यन्तरैकवाक्यताभावात् । तस्मान्नामोच्चारणमत्र विधीयते, न चोक्तमिति भूतार्थत्वान्न विधिरिति वाच्यम् । "उपांशु

पौर्णमास्यां यजन्" इति भूतार्थत्वेऽपि पौर्णमासीकालविधित्वात्, अन्यथोपांशुयाजस्य "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन वचनेन फलसम्बन्धाभावप्रसङ्गात्। अथ यजेतेति वक्तव्य "उपांशु पौर्णमास्यां यजन्" इतिच्छान्दसः प्रयोगस्तर्हि वदेदितिवक्तव्य उक्तमितिच्छान्दसः प्रयोगः। ततश्च नामोच्चारणमत्र विधीयते. तस्य फलाकाङ्क्षायां 'तेनाधीता' इत्यादिफलसमर्पकम्। तथाहि। यथा हि यजमानकार्ययज्ञसाधकतया "यजमानः" इति(शब्दप्रयोगः)प्रस्तरस्तावकस्तथा 'तेनाधीता' इतिप्रत्यक्षबाधितत्वात् स्तुतिशक्तेरध्ययनजन्यफलसाधकतया नामोच्चारणं स्तूयते। ततश्चार्थवादोपस्थिताध्ययनफलमेवास्य नामोच्चारणविधेः फलमिति रात्रिसत्रन्यायेन कल्प्यते।

न च नामोच्चारणं क्रत्वङ्गं, मानाभावात्। 'यस्य स्मृत्या च नामोक्त्या' इत्यादेर्वाक्यस्याच्युतस्तुतिरूपत्वात्। आस्तां वा क्रत्वङ्गं नामकीर्त्तनवादोऽयं 'ऋग्वेद' इत्यादिः। सर्वथा नैवेदमैकान्तिकं शूद्राधिकारलिङ्गम्, यज्ञानां त्रैवर्णिकाधिकारत्वात्तदङ्गनामकीर्त्तनस्यापि त्रैवर्णिकाधिकारत्वात्। यच्चोक्तं 'स्त्रीशूद्रद्विजबन्धूनाम्' इत्यादिवाक्यावष्टम्भेन संकीर्त्तनस्य शूद्राधिकारत्वमिति। तत्रोच्यते। सत्यम्. स्त्रीशूद्रादीनामर्थे भारतादिनिर्माणं न तु तन्मात्रार्थं, तत्र ब्राह्मणादीनामपि धर्मनिरूपणात्। 'इतिहासपुराणाद्यैर्वेदार्थमुपबृंहयेत्' इति ब्राह्मणादिकर्त्तव्यवेदार्थनिर्णयोपायत्वेनोपादानाच्च। यच्चोक्तं संकीर्त्तनस्य पौराणत्वात् स्त्रीशूद्राधिकारत्वमिति। तदप्यसत्। पुराणादिनिर्माणस्य स्त्रीशूद्रार्थत्वाभावात्। किञ्च पुराणानामनित्यातीन्द्रियवेदमूलत्वस्य स्मृतीनामिव शास्त्रकृद्भिर्निराकृतत्वात्, प्रत्यक्षवेदवाक्यमेव दृष्ट्वा बादरायणादिभिः पुराणनिर्माणात्, अस्मदादिभिस्तददर्शनेऽपि संकीर्त्तनं वेदविहितमेव। दृश्यन्ते च अस्मदादिभिरपि संकीर्त्तनप्रतिपादकानि वेदवाक्यानि।

तमु स्तोतारः पूर्व्यम्० आस्य जानन्तो नाम चिद्विविक्तन। प्रतत्ते

अद्य शिपिविष्टनामार्यः शंसामि । त्वेषं ह्यस्य स्थविरस्य नाम । मनामहे चारुदेवस्य नाम । त्वेषं रुद्रस्य नाम । इत्यादीनि ।

यदप्युक्तं ब्राह्मणानामध्यापनादिव्यापृतत्वेन संकीर्त्तनकालाभावादब्राह्मणाधिकारं संकीर्त्तनमिति । तदप्ययुक्तम् । अध्यापनादेरावश्यकत्वाभावात् ।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।

याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ (मनु०-१०-७६)

इति विध्यभावाच्च, ज्योतिष्टोमाद्यननुष्ठानप्रसङ्गाच्च । वस्तुतस्तु 'श्रावयेच्चतुरो वर्णान्'इत्यस्य "एतया निषादस्थपतिं याजयेत्" इतिवत्प्रयोज्यव्यापारपरत्वेन श्रवणविधिपरत्वात्तस्य चाध्ययनविधिवद्दृष्टार्थत्वात् पुराणार्थकामाश्चत्वारो वर्णाः पुराणानि शृणुयुरित्यर्थोऽवसीयते । ततश्चोत्तरक्रतुष्वध्ययनसिद्धार्थज्ञानवतामिव पौराणेषु कर्मसु श्रवणविधिसिद्धार्थज्ञानवतां चतुर्णां वर्णानामधिकारो निश्चीयते । 'श्वादः पुल्कसको वापि शुद्ध्येरन्यस्य कीर्त्तनात्' इत्यादिवचनात्तु चण्डालादीनामप्यधिकारः । तेषां हि पुराणश्रवणाभावेन शूद्रस्येवाध्ययनाभावेन वैदिकेषु कर्मसु, पौराणेषु कर्मसु संकीर्त्तनादिषु न्यायेनानधिकारेऽपि "एनया निषादस्थपतिं याजयेत्" इतिनिषादेष्टाविव निषादस्य,उक्तवचनादधिकारो निर्णीयते । तस्मात्संकीर्त्तनं त्रैवर्णिकाधिकारमत्रैवर्णिकाधिकारम् ( च ) । तत्रापि मुक्तानां मुमुक्षूणां विषयिणां च परमेश्वरसंकीर्त्तनेऽधिकारः ।

ननु मुक्ता इत्युक्ते ज्ञानिनो वक्तव्याः । विदेहकैवल्ये संकीर्त्तनायोगात् । तेषां च न किञ्चित्कर्त्तव्यं 'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन'(भ.गी.) इतिकर्मकरणाऽकरणसाध्यफलाभावस्मरणात् । सत्यम् । अदृष्टार्थे कर्मविषये तद्वाक्यम् , दृष्टार्थेषु तु ज्ञानिनोऽपि प्रवर्त्तन्ते , अन्यथा भोजनाद्यभावेन देहपातप्रसङ्गात् । ननु तत् कीर्त्तनं किं दृष्टार्थं ब्रवीषि । ओमितिचेत् न । भोजनादिवद्विध्यभावप्रसङ्गात् । उच्यते । संकीर्त्त-

नमदृष्टार्थं विधीयत इत्यत्र न विवादः। बहुभिर्वाक्यैः फलार्थत्वेन विधानात्। किन्तु दृष्टार्थमपि तद्भवति। दृश्यते संकीर्त्तनं कुर्वतां सद्यश्चित्तविश्रान्तिः। अत एवानुभववाक्यम्—

अमृतं दिवि किल मधुरम्
भवति च भुवि काव्यनाटकं मधुरम्।
मधुरादपि मधुरतरम्
वल्लवस्य नाम यद्गीतम्॥

इतिकृष्णकीर्तनकृतां रोमोद्गमादिसुखातिशयलिङ्गदर्शनादपि सुखहेतुत्वं ज्ञायते। अत एव ज्ञानिनां संकीर्त्तनजन्यादृष्टाभावेऽपि संकीर्त्तनतः सुखातिशयो भवत्येवेति तदभिप्रायेण मुक्तानां संकीर्त्तनाधिकाराभिधानम्। अत एवोक्तम्—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमीदृग्भूतगुणो हरिः॥ (श्री.भा.१-७-१०)इति

अस्यार्थः। मुनयः-श्रवणमननसम्पन्नाः, आत्मारामाः—कृतसाक्षात्काराः, अविद्यानाशेन च निर्ग्रन्थाः—अहङ्कारग्रन्थिरहिताः,तेऽप्युरुक्रमे—श्रीकृष्णे, भक्तिं—कीर्त्तनादिरूपाम्. अहेतुकीं-तज्जन्यादृष्टफलाभिसन्धिशून्याम्। तर्हि कथं प्रवृत्तिः, न हि फलमनभिसन्धाय कश्चित्प्रवर्त्ततेऽत उक्तम्'इत्थं भूतगुणो हरिः'इति। सोऽयं भगवद्गुणानां महिमेत्यर्थः। ततश्च भगवद्गुणानुवादजन्यसुखातिशयाय प्रवर्त्तन्त इति सूचितम्। च शब्दः संसारिसमुच्चयार्थः। अपिशब्दः प्रवृत्त्ययोग्या अपि प्रवर्त्तन्त इतिविरोधाभासद्योतनार्थः। तत्सिद्धं मुक्तानामप्यधिकार इति। अत एव शुकयोगीन्द्रस्य भागवतसंकीर्त्तनाय परिक्षिन्निकटे गमनं श्रूयते, स हि मुक्तमण्डलीमूर्द्धन्यत्वेन प्रसिद्धः।

केचित्तु मुक्तानामपि न सर्वकर्मानधिकारः। काम्येषु कर्मसु संसारोपपादकेषु निषिद्धेष्विव न प्रवर्त्तन्ते कामाभावात्। नापि

प्रायश्चित्तेषु पापचरणाभावात् । नित्यनैमित्तिकेषु तु प्रवर्त्तन्त एव । तेषां संसारानापादकत्वात् पापक्षयमात्रफलकत्वात् । 'नैव तस्य कृतेनार्थ'(भ०गी०३-१८)इत्यादिवाक्यस्य ज्ञानिनस्तुतिमात्रपरत्वात् । एवञ्च परमेश्वरसंकीर्त्तनस्यापि संसारानापादकत्वात्प्रत्युत विरोधित्वात्पापक्षयमात्रफलकत्वाच्च तदुद्देशेन मुक्ता अपि संकीर्त्तनेऽधिक्रियन्ते । अत एव गीतासु—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ (अ०७-१६)

इतिज्ञानिनां संकीर्त्तनरूपभजनाधिकारः प्रतिपाद्यते । अत्र हि भजन्त इति वर्त्तमानापदेशत्वेऽप्यपूर्वार्थत्वाद्विधिः स्वीक्रियते भजयेयुरिति । तत्र चत्वारोऽधिकारिणः–आर्तो–जिज्ञासुः–अर्थार्थी–ज्ञानी–चेति । तत्रार्त्तस्यार्त्तिनिवृत्तिः, जिज्ञासोर्ज्ञानं, अर्थार्थिनस्त्वर्थः फलमिति व्यवसीयते सामर्थ्यात् । ज्ञानिनः फलाकाङ्क्षायामुक्तफलासंभवान्निष्कामत्वेन विश्वजिन्न्यायानवताराद्योग्यतया पापक्षय एव कल्प्यते । न चात्र वाक्यभेदः । चत्वारो मां भजेयुरित्येकार्थ–प्रतिपादकत्वात् । के चत्वार इत्यपेक्षायां वाक्यविशेषस्था निर्णीयन्ते । सुकृतिन इति सुकृताभाव आर्त्तादयोऽपि न परमेश्वरं भजन्त इत्युच्यते । तस्मादस्ति मुक्तानामप्यधिकारः संकीर्त्तनादौ । अन्यथा भजन्त इत्यस्य ज्ञानिनो विषयेऽनुवादत्वमार्त्तादिविषये च विधित्वमितिवैरूप्यप्रसङ्गः ।

तदेतन्मतमौपनिषदा न मन्यन्ते । तथाहि । ज्ञानिनां न कुत्राप्यधिकार उपयुज्यते । नित्यनैमित्तिकेष्वपि फलाभावात्सकलपापक्षयस्य ज्ञानोदयेनैव सिद्धत्वात् । न च मानाभावः, "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे" इतिश्रुतेः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इतिस्मृतेश्च मानत्वात । नचैतदर्थवादमात्रम् । अर्थवादानामपि साधकबाधकमानाभावे स्वार्थे

प्रामाण्यात् । अत एव "वज्रहस्तः पुरन्दरः" इत्याद्यर्थवादे देवता-विग्रहादिसिद्धिः । ततश्च परमेश्वरसंकीर्त्तनेऽपि न पापक्षयोद्देशेन प्रवृत्तिः, किन्तु परमात्मपरिचर्यापरिशीलनपरिप्रापितसंकीर्त्तना-द्यनुरागानुवृत्तिवशात्संकीर्त्तनादौ प्रवृत्तिः । दृष्टं फलञ्च सकल-शरीरेन्द्रियाद्याप्यायनं निष्पद्यत इत्येष एव मुक्तानामधिकार-शब्दार्थः । 'चतुर्विधा भजन्ते माम्'इत्यार्त्तादिषु विधित्वेऽपि ज्ञानिनं प्रत्यनुवाद एव । न च वैरूप्यम् । "अवहन्यात्" इत्यप्राप्तदशायां विधि-त्वेऽपि प्राप्तिदशायामनुवादत्वात् । तस्मादुक्तविध एव ज्ञानिनं संकीर्त्त-नाधिकारः । मुमुक्षूणामप्यधिकारः संकीर्त्तने,तस्य मोक्षफलकत्वात् । तथाहि । विष्णुसूक्ते श्रूयते—

तमु स्तोतारः पूर्व्यं यथा विद
ऋतस्य गर्भं जनुषा पिपर्त्तन ।
आस्य जानन्तो नाम चिद्विविक्तन
महस्ते विष्णो सुमतिं भजामहे ॥ इति ।

अस्यार्थः । तत्र केचित् । तं-प्रसिद्धम्, उ-इत्यनर्थको निपातः । स्तोतारः-स्तुध्वम्, पूर्व्यं-जगत्कारणम्, यथा विद-गुणा-नामानन्त्येऽपि स्वमतिपरिणामावधीत्यर्थः । ऋतस्य-वेदान्तवाक्यस्य, गर्भं-प्रतिपाद्यम् । स्तुतेः फलमाह-जनुषा पिपर्त्तनेति । जन्म पूर्यता-मितिवक्तव्ये कर्मकर्तृप्रयोगे तद्व्यत्ययकरणत्वनिर्देशः छान्दसः । जन्मसमाप्तिः फलमिति भावः । स्तुत्यसंभवे जानन्तो यूयं, अस्य-परमात्मनो नामचित्-नामापि, विविक्तन-वदतेति । एवं परानुपदिश्य श्रुतयः स्वयमूचुः । एते भजन्तु मा वा वयं तु ते-तव, महः-प्रकाशा-त्मकं स्वरूपं, हे विष्णो सुमतिं-शुद्धज्ञानात्मकं, पुंस्त्वं छान्दसं, भजा-महे-सेवामह इति । वयन्तु ब्रूमः-तं "यः पूर्व्याय" इत्यादिपूर्वमन्त्रे जगद्धेतुत्वादिना प्रतिपादितम् । नचास्मिन्मन्त्रे पूर्व्यमिति विशेषण-वैयर्थ्यम् । तस्य तात्पर्यान्तरस्यानुपदं वक्ष्यमाणत्वात् । 'उ' इतिजन्म-

मरणादिसंसारक्लेशैः संतप्यमानानुपदेश्यान् श्रुतिः परमकरुणया कोमलमामन्त्रयते मातेव शिशून् । स्तोतारः इति स्तुध्वं- संकीर्त्तनं कुरुध्वमित्यर्थः । ननु यज्ञाद्यनुष्ठाने प्रवर्त्तन्ते भगवद्गुणसंकीर्त्तने तु लज्जन्ते तत्राह-पूर्व्यं-पूर्वं भवः पूर्व्यः तं पूर्वजमित्यर्थः । न हि स्वपूर्वजस्तवने लज्जोचितेति भावः । तच्चात्र मन्त्रे विधीयते, अपूर्वार्थत्वात् ।

ननु मन्त्रगतत्वेन "देवांश्च याभिर्यजते ददाति च" इत्यादिमन्त्रगताख्यातवत् स्तोतार इत्यस्याविधायकत्वम् । मन्त्राणां स्मारकत्वेन विधायकत्वाभावात् । ब्राह्मणस्यैव विधायकत्वात् । उच्यते । दर्शितमेतद्वार्त्तिककारैर्मन्त्राणामपि "वसन्ताय कपिञ्जलानालभेत" इत्यादीनां विधायकत्वम् । ब्राह्मणस्यापि "यस्योभयं हविरार्त्तिमार्च्छेत्" इत्यस्याविधायकत्वम् । अतश्च ब्राह्मणगतत्वं मन्त्रगतत्वं वा न विधायकत्वाविधायकत्वयोः प्रयोजकं, किन्तु यच्छब्दादिविध्युपघातकाभावे तद्भावे चोभयगतस्यापि विधायकत्वमविधायकत्वञ्च । "देवांश्च याभिः" इत्यत्र यच्छब्दयोगात्प्राप्तार्थत्वाच्च न विधिः । प्रकृतमन्त्रे तु तद्वैपरीत्याद्विधिरेव । फलाकाङ्क्षायामाह—ऋतस्य गर्भं जनुषा पिपर्त्तनेति । "ऋतं पिबन्तौ" इतिमन्त्रे जीवेश्वरप्रतिपादके शारीरभाष्यकृद्भिः ऋतशब्दः कर्मफलत्वेन व्याख्यातः, पिबन्ताविति च्छत्रिन्यायेन पिबदपिबत्परः । तद्वदत्रापि ऋतस्य--कर्मफलस्य सुखदुःखात्मकस्य, गर्भं-कारणभूतं भ्रान्तिज्ञानं, जनुषा-जनकेनाज्ञानेन सहार्थे तृतीया, पिपर्त्तन-पूरयत–समापयतेत्यर्थः । सकार्याज्ञाननिवृत्तिः फलमितिभावः । इतिकर्त्तव्यताकाङ्क्षायामाह-यथाविदेति । यथा ज्ञायते वैदिकैर्वा पौराणिकैर्वा पौरुषेयैर्वा संस्कृतैर्वा प्राकृतैर्वा स्तोत्रैर्गुणसंकीर्त्तनं कुर्यादिति । ततश्च कथञ्चित् संकीर्त्तननिष्पादनमेवेतिकर्त्तव्यतेति भावः । एवञ्च सति तत्वज्ञानमवान्तरव्यापार इति सिध्यतीत्याह-जानन्त इति । अस्य विष्णोर्नाम, आ-

ईषत्, विविक्तन-वदतेत्यर्थः। चिदित्ययं भगवद्गुणसंकीर्त्तनात्तद्गुण-ज्ञानसापेक्षान्नामसंकीर्त्तनस्याल्पायाससाध्यत्वं प्रतिपादयति। फलन्तु मोक्षाख्यं मध्यमणिन्यायेनोभयत्र संबध्यते। अथ श्रुतिः उभयविधसंकीर्त्तनस्य फलान्तरं सूचयन्ती उपदेश्यान्पुरुषान् प्रति ब्रूते—महः—प्रकाशात्मकं,ते-त्वां, सुमतिं-शुद्धबुद्धिं, भजामहे। विष्णो इति सम्बोधनं ते इत्येकवचनं च संकीर्त्तनकर्तॄणां विष्णुसायुज्याभिप्रायेण। अन्यथा पादत्रयेण पुरुषसंबोधनमन्त्यपादे तु विष्णोः सम्बोधनमित्यसंबद्धं स्यात्। भजामह इति बहुवचनमितरलोकसाहित्याभिप्रायेण। एतदुक्तं भवति—गुणनामकीर्त्तनकर्त्तारो विष्णुसायुज्यं गच्छन्ति सकललोकभजनीयाश्च भवन्तीति।

ननु विष्णुरहमित्यहंग्रहोपासनाविरहे संकीर्त्तनमात्रेण कथं विष्णुसायुज्यम। अहंग्रहोपासनया वा कथं प्राप्तिः। वचनादितिचेत्, प्रकृतेऽपि तुल्यम्। इदमेव संकीर्त्तनकृतां विष्णुसायुज्यप्रतिपादकपुराणवाक्यानां मूलभूतं श्रुतिवाक्यम्। पातञ्जलसंहितायां-

नृहरे इति यो नित्यं कीर्त्तयेच्छुद्धबुद्धिमान्।
विमुक्तः सर्वपापेभ्यो हरिसायुज्यमृच्छति॥

वात्स्यायनसंहितायां—

गोघ्नःसुरापो नियतं हरिरित्यसकृद्वदन्।
एनसः सर्वमुक्तात्मा हरेः सायुज्यमाप्नुयात्॥

शातातपसंहितायां—

नाम्नां मे किल संकीर्त्तनात्
मयि नरः सायुज्यमायात्यहो॥ इति।

विष्णुपुराणेऽपि—हिरण्यकशिपुरावणयोःपरमेश्वरव्यतिघातितयोरपि न मुक्तिः, चैद्यस्य कृष्णसायुज्यप्रस्तावे 'चैद्यस्यैवं कथं मुक्तिः' इति प्रश्ने द्वेषेण निरन्तरं श्रीकृष्णस्य त्वहंकारयुक्तनामकीर्त्तनस्यैतत्फलमिति। यत्तु पापक्षयसायुज्यश्रवणमर्थवादे तज्जातेष्टौ "पूत एव

स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति''इत्यत्रेव संवलिताधिकाराभिप्रायम्। संवलिताधिकारत्वं नाम अनेकेषां व्यासज्यवृत्तिफलत्वं, लाघवेनानेकसंबन्धकल्पनान्न प्रत्येकं "सर्वेभ्यो दर्शपौर्णमासौ" इतिवत्फलत्वमिति।

ननु संकीर्त्तनादिभक्तिकृतां विष्णुसायुज्यप्राप्तौ को मार्गः। न तावद्धूमादिमार्गः, तस्य विष्णुसायुज्यप्रापकत्वाभावात्। नाप्यर्चिरादिमार्गः, तस्योपासकानधिकृत्याम्नानात्। उपासनं हि द्विविधम्, अहंग्रहोपासनं प्रतिकोपासनं च। संकीर्त्तनादिभक्तिश्च नोभयम्। न चान्यो मार्गोऽस्ति। उच्यते। श्रूयते हि पुराणेषु विष्णुभक्तानां विष्णुदूतैर्नयनं विमानागमनं च। एवं सदाशिवभक्तानां शिवदूतैर्नयनम्। न च तदप्रमाणम्। देवताविग्रहन्यायेन बादरायणोक्तेन प्रामाण्यात्। ततश्च विष्णुसायुज्यं गतानां तदनुग्रहात्तत्वज्ञानोत्पत्तिर्मुक्तिश्च भवति। तदेवं निरूपितं विष्णुसायुज्यद्वारं संकीर्त्तनस्य मोक्षफलकत्वम्।

अथ प्रकारान्तरेण व्याख्यायते। स्तोतार इति संबोधनान्तम्। तं·विष्णुं, यथा–यथावत्, विद-वित्त-जानीतेत्यर्थः। ऋतस्य गर्भ-उपनिषद्प्रतिपाद्यं, 'स्तोतार'इति कर्तृविशेषणत्वेनोपात्तापि स्तुतिर्ज्ञानफलत्वेन संबध्यते,"हिरण्यदा अमृतत्वं भजन्ते"इत्यत्र दानमिवामृतत्वेन। ननूपनिषत्प्रतिपाद्यस्य परमात्मनो गुणकीर्त्तनेन कथं यथावज्ज्ञानं लभ्यतेऽत आह-जनुषा-जन्मना, पिपर्त्तन-तं प्रीणयतेत्यर्थः। स्तुत्या प्रसन्नो भगवान् ज्ञानं ददातीत्यभिप्रायः। 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इति वचनात्। तच्च मोक्षफलमिति भावः। एवं जिज्ञासून् प्रत्यभिधाय तत्वज्ञानिनः प्रत्याह-आ-आसमन्ताद्भावेन,अस्य-विष्णोः,जानन्त इति सम्बोधनम्। अस्य विष्णोर्नाम-चित्-सहस्रनामसु यदेव रोचते तद्,विविक्तन-विशेषेण गुणसंकीर्त्तन-

साहित्येन वदत। तत्वज्ञानिनां भगवद्गुणसंकीर्तनप्रवृत्तानामनुभव-मभिनीय त्वां भजामहे वयं, तत् मह–उत्सव इति, तद्भजनमुत्स-वात्मकमिति कृतार्थानामपि तत्वज्ञानां संकीर्त्तनादिषु प्रवृत्तिरुप-पन्नेति दर्शयति। इदमेव तत्वज्ञानिनां संकीर्त्तनादिभक्तिप्रतिपादक-पुराणवाक्यानां 'आत्मारामाश्च मुनय' इत्यादीनां मूलम्। अत्र च "तमु स्तोतार" इत्युपक्रमात् "भजामह" इत्युपसंहारान्नवविधभज-नस्य कर्त्तव्यत्वं सूच्यते। तथा—

प्रतत्ते अद्य शिपिविष्टनामार्यः शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके॥

अस्यार्थः। हे शिपिविष्ट शरीरान्तर्यामिन्, तत् ते-तव, नाम, अद्य-इदानीम्, प्रशंसामि-संकीर्त्तयामि, आर्यः—श्रेष्ठः, श्रेष्ठत्वं च शान्तिदान्त्यादिगुणयोगात्, वयुनानि-ज्ञातव्यानि, विद्वानितिनामो-च्चारणे शान्तिदान्त्यादिसम्पन्नस्य पुरुषस्य ज्ञातव्यं नावशिष्यते। तं त्वा गृणामीति-गुणकीर्त्तनं करोमि, तवसं–महान्तं, अतव्यान्-अल्पः अहं, अस्य रजसः—लोकस्य, पराके—परे पारे, क्षयन्तं-निवसन्तं त्वाम्।

अथ विष्णुसंप्रदानकदाने परिचरणे च श्रुतिः।

नू मर्त्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत्।
प्रयः सत्राचा मनसा यजात एतावन्तं नर्यमा विवासात्॥

अस्यार्थः। यो मर्त्तो-मर्त्यः, उरुगायाय—बहुभिः कीर्त्यमानाय विष्णवे, दाशत्-दधात्। यः सत्राचा-समीचीनेन मनसा, प्रयजाते-यजते विष्णुमर्चयतीत्यर्थः। सनिष्यन्-फलमिच्छन्,नू-क्षिप्रं, दयते-प्राप्नोति, अविशेषात्सर्वं फलं प्राप्नोतीत्यर्थः। तत एतावन्तं-महान्तं, नर्यं-नरेषु हितं विष्णुं, आविवासात् परिचरेदित्यर्थः। अनेन श्रवणकीर्त्तनादीनामनुक्तानां संग्रहः।

अथ विष्णोर्दास्ये श्रुतिः—

त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ।
प्रविष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम ॥

अस्यार्थः । एष—देवः । शतर्चिषं शतं अर्चींषि यस्याः, एतां पृथीवीं—त्रीन् लोकानित्यर्थः, महित्वा -महत्त्वेन, त्रिः विचक्रमे-विक्रान्तवानिति, सोऽयं--विष्णुः, प्रास्तु--प्रभुरस्तु स्वामी भवत्वस्माकम् । "एको दाधार भुवनानि विश्वा" इतिवचनात्स्वामिन एव स्वामित्वस्याप्रार्थनीयत्वात् तद्दासा वयं भवामेति तात्पर्य्याल्लभ्यते । तवसस्तवीयान्—महतो महीयानित्यर्थः । किमिति तस्यैव दास्यं प्रार्थ्यतेऽत आह--हि-यस्मात्, अस्य-पुराणपुरुषस्य नाम, त्वेषं-दीप्तं महत् । महतो हि दास्यमाशास्यं लोकानाम् । अनेन च हेतुवन्निगदेन विष्णोर्दास्यमेव प्रार्थ्यतेऽस्मिन्मन्त्रे । अन्यथा स स्वामी अस्तु यतोऽस्य नाम महदित्यसंबद्धं स्यात् । अस्माकं तद्दास्यमस्तु यतोऽस्य नाम महदिति तु युक्तम् ।

अथ विष्णुस्मरणे कीर्त्तने च श्रुतिः—

विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमाचकार ॥

अस्यार्थः । एष-विष्णुः, एतां पृथिवीं-लोकत्रयं, मनुषे-स्वस्मरणशीलाय भक्ताय देवगणाय, क्षेत्राय-निवासाय, दशस्यन्-असुरेभ्योऽपहृत्य दास्यन्, विचक्रमे-विक्रान्तवान् वामनावतारे, देवैःस्तुत इति कृत्वापि तेभ्यस्त्रैलोक्यं दत्तवानित्याह-ध्रुवास इति । कीरयः-कीर्त्तनशीलाः, उरुक्षितिं-महान्तं निवासं, सुजनिमा-सुजन्मा कृष्णाद्यवतारैश्चकार । अनेन विष्णोर्भक्तवत्सलता सूच्यत इति तदावेदकपुराणवाक्यानां समूलत्वम् ।

अथ विष्णोश्चरणोदकग्रहणे श्रुतिः—

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥

अस्यार्थः । अभिप्रियं—रुच्यं, तत् पाथः-उदकं, अश्यां-पिबेयं, तत्किमत आह-यत् अस्य-विष्णोः, परमे पदे मध्वः-मधुरस्य, उत्सः-निष्यन्दो वर्त्तते, यत्र-प्राथसि पाने वा, नरो-नरा, देवयवाः-देवं विष्णुं प्राप्तुमिच्छन्ते, मदन्ति--हृष्यन्ति, स हि--पुरुषः, इत्था-इत्थं पान-प्रकारेण, उरुक्रमस्य- विष्णोः, बन्धुः-सुहृद्वल्लभ इत्यर्थः । अथवा, सः-अहं, इत्था-इत्थं, उरुक्रमस्य—विष्णोः, बन्धुः--सखा भवेयमिति भावः । तदनेन सख्यं निर्दिश्यते । अस्यैव मन्त्रस्यार्थान्तर-व्याख्यानेऽपि नेदं व्याख्यातुमसमर्थमिति भवत्येव विष्णोश्चरणोद-कग्रहणे सख्ये च लिङ्गम् ।

अथ पादसेवने श्रुतिः—

यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भूवनानि विश्वा ॥

अस्यार्थः । यस्य-विष्णोः,(त्री-)त्रीणि, मधुना पूर्णा पूर्णानि-आनन्द-रूपाणीत्यर्थः । त्रित्वं पादप्रक्षेपत्रित्वात् । अक्षीयमाणा--पादप्रक्षेपणे अक्षीणानि पदानि, स्वधया-अन्नेन, उपलक्षणमेतत्सर्वफलेन, मदन्ति-मादयन्ति-हर्षयन्ति तदाश्रितजनानिति भाष्यकारैर्व्याख्या-तम् । यः त्रिधातु-त्रिप्रकारं, पृथिवीं उत द्यां, किं बहूक्त्वा विश्वा-सर्वाणि भुवनानि, एकः दाधार-दधारेति ।

अथ स्वीयसर्वस्य भगवदर्पणे संकीर्त्तने श्रवणे च श्रुतिः—

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति ।
यो जातमस्य महतो महिब्रवत्सेदुश्रवोभिर्युज्यं चिदभ्यसत् ।

अस्यार्थः । यः-पुरुषः, पूर्व्या-कारणाय, वेधसे-कर्त्रे, नवीयसे नित्यनूतनाय, सुमज्जानये-सुमती श्रीर्जाया यस्य तस्मै विष्णवे,

ददाशति-अर्पयति, अविशेषात्सर्वदेहादि । यो जातं-जन्म, उपलक्षणमेतद् गुणकर्मणाम् । अस्य-विष्णोः, ब्रवत्-ब्रूयात् , स इत्-निपातौ अवधारणार्थौ प्राप्नुयादेवेति । युज्यं चिद् गन्तव्यमुत्तमपदं,अभ्यसत्-प्राप्नुयात् . श्रवोभिः-अन्नैः कीर्त्तिभिर्वा. यद्वा श्रवणैः सन्निधानाज्जन्मगुणकर्मणाम । "द्वा सुपर्णा सयुजा" इति मन्त्रवर्णात् । युज्यं चित्-स्वरूप परमात्मानं अभि-आभिमुख्येन अनुरागेण अन्नेन वा असन्-प्राप्नुयात् ।

अथ श्रवणेकीर्त्तनेसामान्यसेवने (च) श्रुतिः—

प्रविष्णवे शुषमेतु मन्म गिरिक्षित उरुगायाय विष्णो ।

य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरेभिः पदेभिः ॥

अस्यार्थः । प्रकर्षेण शूषं-बलं, एतु—आयातु, मद्-महत् , किमर्थं विष्णवे-विष्णुं सेवितुं, गिरिक्षिते-वाचि तिष्ठते । विष्णुपदादेव सर्वस्य सर्वत्रावस्थानप्रतीतेः पुनरुक्तिरितिचेन्न , अर्थविशेषद्योतनार्थत्वात् । तथाहि । कस्य वाचि तिष्ठत इत्यपेक्षिते उरुगायायेति सन्निधानात् यत्रैनं गायन्ति तस्यां वाचि विशेषेण तिष्ठत इति लक्ष्यते, ततश्च 'मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद' इति श्रुतिमूलमेतत् । अतश्चावश्यं सेवनीय इत्यर्थः । वृष्णे-कामवर्षिणे, अतोऽपि सेव्य इति । महत्वातिशयमाह-य इदं दीर्घं प्रयतं-नियतं, सधस्थं-स्थानं लोकत्रयं, त्रिभिः पदेभिः, एक इत्-एक एव, विममे—विक्रान्तवानिति ।

अथ भगवदेकशरणतयावस्थानात्मनिवेदने श्रुतिः—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति शरणप्रपदनं-भगवदेकशरणतयावस्थानमात्मनिवेदनं भक्तिरभिधीयते । मुमुक्षुरिति तस्य मोक्षफलकत्वम् , तच्च ज्ञानद्वारेति

दर्शयति-आत्मबुद्धिप्रकाशं आत्मनां-जीवानां बुद्धेः प्रकाशयितारं तत्वज्ञानप्रदमित्यर्थः। देवं-द्योतनात्मकं, तस्यैव सामर्थ्यातिशयमाह-यो ब्रह्माणमिति। यद्वा प्रपद्य इत्यत्र तकारलोपः छान्दसः प्रपद्ये-तेत्यर्थः। अहमिति नास्मच्छब्दः किन्तु अहङ्कारोपहितजीवा-भिधानम्।

अथास्य यजने गुणकीर्त्तने च श्रुतिः—

वषट् ते विष्ण आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥

अस्यार्थः। त्वा-त्वां, मे-मम, शोभनस्तुतिरूपा गिरो, वर्धन्तु-वर्धयन्तु प्रीणयन्तु, अनेन भगवद्गुणकीर्त्तनात्मकस्तुतेः फलमुच्यते। परमं फलं सूचयन्नाह—यूयं पात स्वस्तिभिः सदा न इति। बहुवच-नानि छान्दसानि। पातेत्यनेनान्वितानि सदा स्वस्तिशब्देन ब्रह्मान-न्दावाप्तिः, न ह्यन्यत्सदा स्वस्ति भवतीति। एवं तावत् भगवद्गुण-कीर्त्तनादिषु क्वचिद्विधिरेव यथा "तमु स्तोतारः" इति। यथा वा "एतावन्तं नर्यमाविवासात्" इत्यन्यत्र तु श्रुतिलिङ्गानि। उभयथाप्यु-क्तवक्ष्यमाणवाक्यानां समूलत्वम्। निरूपितं हि शास्त्रकारैः "दक्षिणं हि दीक्षितः पूर्वमङ्क्ते, सव्यं हि मनुष्याः पूर्वमञ्जते" इति दीक्षित-दक्षिणाक्षिपूर्वाञ्जनविधिशेषार्थवादलिङ्गमूला मनुष्यसव्यपूर्वाञ्जन-स्मृतिरपि। यथा वा अवदानविधेः "जायमानो वै ब्राह्मणस्त्रिभिर्ऋ-णवा जायत" इत्याद्यर्थवादलिङ्गमूला ऋणत्रयापाकरणस्मृतिः। एवं श्रवणकीर्त्तनादिभगवद्भक्तिप्रतिपादकानां पुराणवाक्यानां "तमु स्तोतार" इत्यादिविधिश्रुति-तल्लिङ्गमूलत्वं सिद्धम्। अतश्च "उरुगायाय वृष्णे" "उरुगायाय दाशत्" "एतमेव वीणया यं गायन्ति" इत्यादिश्रुतिलिङ्गमूलानि भगवद्गुणगानकर्त्तव्यताप्रतिपादकानि पुराणवाक्यानि। गायतेः पङ्कजशब्दस्य तामरस इव गीतौ रूढत्वात्, अत एव लिङ्गपुराणे उत्तरार्धे—

कृष्णः स्तुत्यति केनेह सर्वदेवेश्वरेश्वरः ।
वक्तुमर्हसि चास्माकं सूत सर्वार्थविद्भवान् ।
सूत उवाच--पुरापृष्टोमहातेजा मार्कण्डेयो महामुनिः ।
अम्बरीषेण विप्रेन्द्रास्तद्वदाभि यथातथम् ॥

इत्यम्बरीषमार्कण्डेयसंवादं प्रक्रम्य—

पुरा त्रेतायुगे कश्चित्कौशिको नाम वै द्विजः ।
वासुदेवपरो नित्यं सामगानरतः सदा ।
भोजनासनशय्यासु सदा तद्गतमानसः ।
उदारचरितं विष्णोर्गायमानः पुनः पुनः ।
विष्णुस्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ।
अगायत हरिं तत्र लयतालसमन्वितम् ॥

इत्यादिना भगवद्गुणगायकस्य कौशिकस्य तदन्नदातुश्च पद्मा‍क्षस्य नित्यं तद्गानं शृण्वतस्तच्छिष्याणां च राजन्यवैश्यविप्राणां गान-विद्याधिकानां वासुदेवपरायणानां गालवनामकस्य वैश्यस्य च विष्णु-परायणस्य सभार्यस्य तद्गानं शृण्वतः, अन्येषाञ्च ब्राह्मणानां शृण्वतां स्वगुणगानार्थं कलिङ्गराजेन कृतेऽपि निग्रहे विष्णुगुणव्य-तिरिक्तगाननिवृत्तानां सर्वेषां कालगतिं गतानाम्—

वेष्टितः स्वगुणै राजन् ब्रह्मा प्राह च तान् सुरान् ।
कौशिकादीन् द्विजानद्य वासुदेवपरायणान् ॥
गानयोगेन ये नित्यं पूजयन्ति जनार्दनम् ।
तानानयत भद्रं वो यदि देवत्वमिच्छथ ॥

इत्यादिना विष्णुलोकगमनं भगवदनुग्रहश्च श्रूयते ।

ततोऽवलोक्य भगवान् हरिर्नारायणः प्रभुः ।
कौशिकेत्याह संप्रीत्या तांश्च सर्वान्यथाक्रमम् ॥
जनघोषो महानासीन्महाऽऽश्चर्ये समागते ।

ब्रह्माणमाह विश्वात्मा शृणु ब्रह्मन्यथोचितम् ॥
कौशिकस्य तु ये विप्राः साध्यसाधनतत्पराः ।
हिताय संप्रवृत्ता ये कुशस्थलनिवासिनः ॥
मत्कीर्त्तिश्रवणे युक्ता गानतत्वार्थकोविदाः ।
अनन्यदेवताभक्ताः साध्यदेवा भवन्त्विमे ॥
मत्समीपे ततोऽन्यत्र प्रवेशं देहि सर्वदा ।
एवमुक्त्वा पुनर्देवः कौशिकं प्राह माधवः ॥
स्वशिष्यैस्त्वं महाप्राज्ञः संसक्तो मम वै सदा ।
गणाधिपत्यमापन्नो यत्राहं त्वं समास्व वै ॥
गालवं मालतीं चैव प्राह दामोदरो हरिः ।
मम लोके यथाकामं भार्यया सह गालव ॥
दिव्यरूपधरः श्रीमान् शृण्वन्गानमिहाधिपैः ।
आस्व नित्यं यथाकामं यावल्लोका भवन्ति वै ॥
पश्चात्तमाह भगवान् धनदो भव मानद ।
धनानामीश्वरो भूत्वा यथाकालं हि मां पुनः ।

आगम्य दृष्ट्वा नत्वा च कुरुष्व च यथासुखम् ॥ इत्यादि ।

अम्बरीषं प्रति—तस्मात्त्वया महाराज विष्णुक्षेत्रे विशेषतः ।
अर्चायं गाननृत्यादिवाद्योत्सवसमन्वितम् ।
कर्त्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशं नृप ॥
श्रोतव्यं च त्वया नित्यं स्तोतव्योऽसौ हरिःस्वयम् ॥इति।
विष्णुक्षेत्रे ततो विद्वान् कारयेद्भक्तिसंयुतः ।
गानं नृत्यादिकं चैव विष्ण्वाख्यानकथां तथा ॥
जातिस्मृतिं च मेधां च तथैव परमोन्नतिम् ।
प्राप्नोति विष्णुसायुज्यं सत्यमेतन्नराधिप ॥ इति ।

ततोऽप्यग्रिमाध्याये कौशिकादीनां गानयोगेन भगवदनुग्रहमवलोक्यानुतप्तो नारदस्तप्त्वाऽऽकाशवाचा नियुक्तो गानबन्धुमुलुकेन्द्रमाह—'प्राज्ञ शृणु सर्वं यथातथम्' इत्युपक्रम्य—

यद्दत्तं यद्धुतं चैव यद्वाचा श्रुतमेव च ।
यदधीतं मया सर्वं कलां नार्हन्ति षोडशीम् ।
विष्णोर्माहात्म्ययुक्तस्य गानयोगस्य वै ततः ॥

इत्यादिना गानयोगविषये तं प्रार्थितवान् । गानबन्धुरपि भुवनेशं नाम राजानं प्रकृत्य—

तस्य राज्ञः पुराभ्यासीद्धरिमित्र इति स्मृतः ।
ब्राह्मणो विष्णुभक्तश्च सर्वद्वन्द्वविवर्जितः ॥
नदीपुलिनमासाद्य प्रतिमां स हरेः शुभाम् ।
अभ्यर्च्य च यथाशास्त्रं घृतदध्युत्तरं बहु ॥
मृष्टान्नं पायसं दत्त्वा हरेरावेद्यपूर्वकम् ।
प्रणिपत्य यथान्यायं तत्र विन्यस्तमानसः ।
अगायत हरिं साक्षात्तालवर्णलयान्वितम् ॥

इत्यादिना भगवद्गुणगायकं हरिमित्रं प्रशस्य तत्प्रतिबन्धकर्त्तुश्च राज्ञो यमयातनां निरूपितवान् । न चैतदब्राह्मणविषयम्—

ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं नृप ।
हरेः सालोक्यमाप्नोति रुद्रज्ञानाधिको भवेत् ॥
अन्यथा नरकं गच्छेत् गायमानोऽन्यदेववत् ॥ इति ।

तत्रैव ब्राह्मणकर्त्तव्यताप्रतिपादनात् । तत्सिद्धं ब्राह्मणेनापि विष्णोर्गुणगानं कर्त्तव्यमिति, श्रोतव्यश्च तदिति । तकर्तॄणां पद्माक्षप्रभृतीनामुत्तमगतिश्रवणात् , भगवति चित्तानुरागहेतुत्वाच्च

भगवद्गुणगानस्य कर्त्तव्यता श्रोतव्यता च विज्ञायते । 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' (भाग०७-१-३१)इतिभागवतवचनात्। अतश्च तत् (पूर्वोक्तं) निरस्तम्। यदुक्तं भाषागीतं न श्रोतव्यं न कर्त्तव्यञ्चेति। ( तन्न युक्तम् )। परमेश्वरातिरिक्तविषयस्य तथात्वेऽपि परमेश्वरगुणनामकीर्त्तनभाषागीतस्य पुनः पुनः क्रियमाणस्य श्रूयमाणस्य वा भगवति चित्तानुरागहेतुत्वेन प्रत्यक्षसिद्धत्वात्।

न च "न म्लेच्छितवै म्लेच्छो वा यदपशब्दः" इति निषिद्धत्वाद्भाषया भगवद्गुणानुवादोऽप्यकर्त्तव्य इति वाच्यम्। तस्य विहितत्वेन निषेधाप्रवृत्तेः। न च भगवद्गुणनामकीर्त्तनकर्त्तव्यताविधेरुक्तनिषेधानुरोधेन संकोचो युक्तः, साधुशब्देनैव भगवद्गुणनामकीर्त्तनं(कर्तव्यं)इति वाच्यम्।निषेधस्य रागप्राप्तविषयकत्वेनाप्युपपत्तेः।नचैवंसाक्षाच्छ्रूयते साधुशब्देनैव भगवद्गुणनामकीर्त्तनं कर्त्तव्यमिति । किञ्च भगवति द्वेषादिकर्तॄणामपि चैद्यादीनां सद्गतिः सायुज्यादिरूपा श्रूयते, सा च न द्वेषादेः फलं तस्य निषिद्धत्वात्, किन्तु द्वेषादिजन्यानुषङ्गिकपरमेश्वरस्मरणस्य।तथाच तेन सद्गतिश्चेद् भाषयापि भक्त्या गुणानुवादे च सद्गतिर्भवतीति किं वक्तव्यम्।

तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् । (भाग०७-१-३१)

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।

यस्मिन्प्रतिश्लोकमवद्धवत्यपि । (भाग०१२-१२-५१)

गोपीप्रस्तावे—

यासां हरिकथोद्गीतं पुनाति भुवनत्रयम । (भाग०१०-४७-६३)

इत्यादिवचनैश्च कथञ्चिद्गुणानुवादः कर्त्तव्य इति विज्ञायते । किञ्च भाषया लौकिकविषयवार्त्तासु तत्तदभिनिवेशपूर्विकासु न दोषः, परमेश्वरगुणानुवादे तु परमेश्वरस्मारके भाषाकृते दोष इति

वदतां परमेश्वराननुराग एवावशिष्यते । वयन्तु विद्मः । यदेव किञ्चित्परमेश्वरस्मारकं तदनुरागे हेतुभूतं वा तत्सर्वं विहितं 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेद्' इतिप्रतिप्रसवात् । 'ग्राम्यगीतं न शृणुयात्' इति तु न परमेश्वरगीतनिबन्धनकम्, ग्राम्यपदोपादानात् । तत्सिद्धं कथञ्चित् परमेश्वरभक्तिः कर्त्तव्येति ।

अत्र केचिदन्तर्विषयप्रवणा ब्रह्मज्ञानवार्त्तामात्रनिर्वर्त्तननिपुणाः तन्मात्रेणैव कृतार्थमन्या भगवद्भक्तिशून्याः प्रलपन्ति, मायोपहिते ब्रह्मणि भगवति तल्लीलाविग्रहे वा मायिनि किमित्यादरः क्रियते, प्राप्याभावात्, स्वयं कर्त्तुरेव ब्रह्मरूपत्वात्, कर्तृत्वस्य मिथ्यात्वात् । स्नानसन्ध्यादिकन्तु लोकव्यवहारार्थं क्रियते न तु तेनापि किञ्चिल्लब्धव्यमस्ति । एवं निषिद्धवर्ज्जनमपि नरकाभावाल्लोकव्यवहारार्थमेव । त एते नामान्तरेण नास्तिका इत्युपेक्ष्याः । कथं नास्तिकाः, वेदान्तानां ब्रह्मणि प्रामाण्याभ्युपगमादितिचेत् । हन्त तर्हि(कथं)स्वर्गनरकाद्यभावः पुण्यपापनुष्ठाने। वेदेनैव ब्रह्मप्रतिपादनवत्पुण्यपापानुष्ठातॄणां स्वर्गनरकादिप्रतिपादनात् । जाते ब्रह्मज्ञाने नास्ति स्वर्गनरकप्राप्तिरितिचेत्। कथं वैराग्यादिसाधनाभावे ब्रह्मज्ञानावाप्तिर्भवताम्। वैराग्यादिसाधनमेव न भवतीतिचेत,तत्प्रतिपादकस्य "ब्राह्मणो निर्वेदमायाद्" इत्यादिवेदवचनस्याप्रामाण्याभ्युपगमेन नास्तिकत्वात् । यदुक्तं—मायोपहिते ब्रह्मणि तल्लीलाविग्रहे वा मायिके किमित्यादरः क्रियत इति । तत्रेदमुत्तरम् । शुद्धस्यैव ब्रह्मणो मायोपहितस्य लीलाविग्रहो भक्तानुग्रहार्थ इति तदादरः क्रियते ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ (भ०गी०४-८)

इतिवचनात्। किंतदनुग्रहेणेतिचेत्। न। तदनुग्रहेण विना परब्रह्मप्राप्त्यभावात् । "यमेवैष वृणुते तेन लभ्यः" (कठ०२-२३) इतिश्रुतेः। अत्र हि

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥

इतिन्यायेन यं वृणुते-अनुगृह्णाति तेनैव लभ्य इत्यर्थः। अन्यथा एवकारस्यासम्बद्धत्वापातात् प्रयोजनान्तराभावाच्च। तादृशश्चानुग्रहो भक्तिमात्रसाध्यः—

न साधयति मां योगो न साङ्ख्यं धर्म एव च।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥(भाग११-१४-२०)

इतिवचनात्। अत्र योगो-ध्यानयोगः, साङ्ख्यम्-अध्यात्मविचारः, धर्मो-यज्ञादिः, स्वाध्यायः-अध्ययनम्, तपः-कृच्छ्रादि, त्यागः-सन्यासः, ऊर्जिता-अभ्यासेन वृद्धिं गता भक्तिर्यथा मां साधयति-वशीकरोति, न तथा योगादय इति। तत्सिद्धं भक्तिः कर्त्तव्येति।

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।
योगेन दानधर्मेण श्रेयोभिरितरैरपि।
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा॥ (भाग०११-२-३२)

इतिवचनेन तत्तत्फलार्थकर्मस्थानापन्नत्वावेदनाच्च सुखरूपा भक्तिः कर्त्तव्येति।

अथैतस्या मोक्ष (प्रापकत्व) प्रतिपादकानि पुराणवाक्यानि प्रदर्श्यन्ते। भगवद्गीतासु—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥ (अ०१८-५५)

शान्तिपर्वणि—

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।

ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥

तथा च तत्रैव—

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥

तथा—

न वासुदेवभक्तानामशुभं विद्यते क्वचिद् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥

ब्रह्मपुराणे—

अप्यन्यचित्तोऽशुद्धो वा यः सदा कीर्त्तयेद्धरिम् ।
सोऽपि दोषक्षयान्मुक्तिं लभेच्चेदिपतिर्यथा ॥

पद्मपुराणे—

संसारसर्पदष्टानां नष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः ॥

तथा—

यत्र तत्र स्थितो वापि कृष्णकृष्णेति कीर्त्तनात् ।
सर्वपापविशुद्धात्मा स गच्छेत् परमां गतिम् ॥
सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पकाः ।
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ॥

विष्णुपुराणे—

विष्णुसंस्मरणादेव समस्तक्लेशसंक्षयः ।
मुक्तिं प्रयाति स्वर्गादिस्तस्य विघ्नोऽनुमीयते ।

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ।
यस्मिन् भृते जन्मजरोद्भवानि
भयानि सर्वाण्यपयान्ति तात ॥ (अ०१-१६-३६)

शिवपुराणे सुधर्मनामराक्षसं प्रति रुद्रवाक्यम्—

कृष्णनाम सदा गेयं ध्येयं गेयं हरेरपि ।
कीर्त्तनीयं सदा नाम मुरारेः परमा गतिः ॥
महादेव महादेव महादेवेति यो वदेत् ।
एकेनैव भवेन्मुक्तिर्द्वाभ्यां शम्भुर्ऋणी भवेत् ॥

श्रीभागवते—

एतन्निर्विद्यमानानामिच्छतामकुतोभयम ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥ (भाग०२-१-११)
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥(भाग०१२-३-५१)इति ।

कीर्त्तनादेवेत्ययं कलेर्गुणः, युगान्तरे तु साधनान्तरादपीति कीर्त्तनादिभक्तिर्मुक्तिसाधनं सर्वयुगेषु । तथा —

तत्तेऽनुकम्पां प्रसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते
जीवते यो मुक्तिपदे स दायभाक् ॥(भाग०१०-१४-८)

वृहन्नारदीये—

यन्नामोच्चारणादेव महापातकनाशनम् ।
यं समभ्यर्च्य विप्रेन्द्राः परं मोक्षो भवेद् ध्रुवम् ॥
अहो चित्रमहो चित्रमहो चित्रमहो द्विजाः ।
हरिनाम्नि स्थिते लोकः संसारे वर्त्तते पुनः ॥

भविष्ये—

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः ।
यत्र तत्रानुकुर्वन्ते विष्णोर्नामानुकीर्त्तनम् ॥
सर्वपापविनिर्मुक्तास्तेऽपि यान्ति सनातनम् ।

ब्रह्मवैवर्त्ते नामोच्चारणमधिकृत्य—

व्रजंस्तिष्ठन् स्वपन् भुञ्जन् श्वसन् वाक्यप्रपूरणे ।
उक्त्वा स्वरूपतां याति भक्तियुक्तः परं व्रजेत् ॥

वाराहे—

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥

वामनपुराणे—

ये मानवा विगतरागपरावरज्ञाः
नारायणं सुरगुरुं सततं स्मरन्ति ।
ते धौतपाण्डुरपटा इव राजहंसाः
संसारसागरजलस्य तरन्ति पारम् ॥

मात्स्ये—

परदाररतो वापि परापकृतनाशकः ।
स शुद्धां मुक्तिमाप्नोति कृष्णनामानुकीर्त्तनात् ॥

गारुडे—

यदिच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ।
तदादरेण महता कुरु गोविन्दकीर्त्तनम् ॥

ब्रह्माण्डे—

के शवा पुरुषा लोके येषां हृदि न केशवः ।
केशवार्पितचित्ता ये न शवा न पुनर्भवाः ॥

आदित्यपुराणे—

हरेः संकीर्त्तनं पुण्यं महापातकनाशनम् ।
सर्वकामप्रदं लोके ह्यपवर्गफलप्रदम् ॥

एवं तत्तत्पुराणेषु बहूनि वचनानि (सन्ति तानि) विस्तरभयान्न प्रदर्श्यन्ते । एतेषां च "तमु स्तोतारः" इत्यादिप्रदर्शितश्रुतिलिङ्गमूलकत्वम् । तत्सिद्धं मुमुक्षुभिः श्रवणकीर्त्तनादिहरिभक्तिः कर्त्तव्येति ।

इति श्रीमदापदेवसूनुनानन्तदेवेन कृते भगवद्भक्तिनिर्णये हरिभक्तिकर्त्तव्यतानिरूपणं नाम प्रथमं प्रकरणम् ॥

———:o:———

अथ भक्तिफलविचारपरं

## द्वितीयं प्रकरणम् ।

—*—

अथैतस्याः फलविचारः प्रस्तूयते । नन्वेवं भक्तेस्तत्वज्ञानद्वारा मोक्षसाधनत्वे चतुर्लक्षणी शास्त्रमनर्थकमापद्यते । अनर्थकमेवास्तु का नो हानिः । यद्वा तस्य वेदान्तविचारात्मकत्वात्तस्य मोक्षसाधन-ज्ञानोद्देशेन "श्रोतव्यः" इत्यादिवाक्यविहितत्वादानर्थक्यानुपपत्तेः, (किन्तु)तुल्यार्थत्वेन व्रीहियववद् विकल्पः । नन्वल्पायाससाध्याया भक्तेस्तद्विपरीतवेदान्तविचारेण सह कथं विकल्पः । उच्यते । कथमल्पायाससाध्यत्वं भक्तेरवगतम् । यथा हि यज्ञाद्यनुष्ठानसा-ध्यविविदिषावतः पुरुषस्य वेदान्तविचारः फलवानेवं यज्ञाद्य-नुष्ठानसाध्यश्रद्धस्य श्रवणादिभक्तिः फलवती । अत एवोक्तं भागवते—

तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥(स्कं०११-२०-६)इति ।

तथा—

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो न चासक्तो भक्तियोगोऽस्य सिद्धिदः॥(स्कं०११-२०-८)

तथा—

अस्मिन्ल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः ।

ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ (स्कं०११-२०-११)

अत्र ज्ञानमध्यात्मविचारः, भक्तिः श्रवणादिका । तथा–

जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान्कामान् परित्यागेऽप्यनीश्वरः ॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः॥(स्कं०११-२१-२७)

ततश्च यज्ञाद्यनुष्ठानसाध्यविविदिषाविरहे वेदान्तविचारोऽपि यथा न मोक्षफलपर्यवसायी तथा यज्ञाद्यनुष्ठानसाध्यश्रद्धाविरहे संकीर्त्तनादिभक्तिरपि न मोक्षफलपर्य्यवसायिनी । पापक्षयादौ तु नोक्तश्रद्धाद्यपेक्षेति वक्ष्यते ।

ननु पुराणाख्यदुर्बलप्रमाणबोधिताया भक्तेः श्रुत्याख्यप्रबलप्रमाणबोधितेन वेदान्तविचारेण कथं विकल्पः । उच्यते । पुराणानामपि "तमु स्तोतारः"इत्यादिश्रुतिमूलत्वावेदनात् । दुर्बलप्रबलभावाभावात् । नन्वनयोर्द्वारैक्यं द्वारभेदो वा । नाद्यः, भक्तस्तात्पर्यावधारणहेतुत्वाभावात् । विचारस्य तद्धेतुत्वात् । नान्त्यः, तदनवगमात , विकल्पानुपपत्तेश्च । न हि प्रयाजावघातयोर्दृष्टादृष्टार्थयोर्विकल्पः सम्भवति । उच्यते । द्वारभेद एव । तथाहि । वेदान्तविचारेणाद्वितीये ब्रह्मणि वेदान्तानां तात्पर्यावधारणे प्रमाणासम्भावनानिवृत्तौ, मननेन च प्रमेयासम्भावनायां चित्तस्य तदैकाग्र्यायोग्यतारूपायां निवृत्तायां, निदिध्यासनेन च विपरीतभावनायां निवृत्तायां तत्वसाक्षात्कारोदये मुक्तिः । प्रकृते तु श्रवणकीर्त्तनादिसाधनभक्तेरनुवृत्तौ भगवति परप्रेमलक्षणानुरागात्मिका फलभक्तिः परप्रेमास्पदभगवन्मूर्त्तिस्फूर्त्तिश्च जायते । ततश्च देहगेहादौ विरक्तस्य भगवत्प्रसादात्तत्वसाक्षात्कारोदये मुक्तिरिति ।

ननु पूर्वा प्रणालिका निरूपिता शास्त्रकारैर्नोत्तरा । किमेतावता । न हि सर्वे सर्वं निरूपयन्ति । युक्ता चेयं प्रणालिका । तथाहि । भगवतः श्रवणकीर्त्तनाद्यनुष्ठाने प्रहर्षः सकलजनानामनुभवसिद्धः ।

विशेषतो यज्ञाद्यनुष्ठानजन्यश्रद्धाविशेषवताम्। यदनुबन्धेन च प्रहर्षो यस्य तस्य तत्रानुरागः सम्पद्यते। चकोरादेरिव चन्द्रादौ। अनुरागे च सम्पद्यमाने तत्स्फुरणं तदन्यविषयेषु चित्तानुबन्धशैथिल्यञ्च। नवतरुण्या इव वल्लभविषये। नतश्च श्रवणकीर्त्तनादिनाऽभ्यस्तेन भगवति पूर्णानुरागात्मकफलभक्तिपरिपाके सकलशक्तियुक्तो भगवान् प्रसीदतीति तस्य तत्वज्ञाने मुक्तिरिति। नचैतदर्थवादमात्रम्, (१) तदर्थप्रतिपादकानां पुराणवचनानामुपलम्भात्। तत्र भक्त्या साधनात्मिकयाऽनुरागात्मकभक्त्युदये कृतार्थता भवतीत्युक्तं भगवद्गीतासु—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः॥ (अ०११-३६) इति।

अर्जुनो ह्येवं ब्रूते श्रीकृष्णम्प्रति—तव प्रकृष्टया—उपचितया कीर्त्या-कीर्त्तनेन कृतेन श्रुतेन वा, यशसा वा श्रुतेन, जगत्-जनः, प्रहृष्यति-प्रकर्षेण सुखीभवति, अनुरज्यते-त्वय्यनुरागञ्च प्राप्नोति। तत्र हर्षो द्वारं त्वय्यनुरागश्च-फलभक्तिः फलम्। ननु केषाञ्चित् भगवच्छ्रवणकीर्त्तनादिनापि न प्रहर्षो दृश्यते, नतरां भगवत्यनुरागः। सत्यम्। नैतावता काचित्क्षतिर्वचनानुभवयोः। न हि ज्वरितानां दुग्धपाने हर्षो न दृश्यत इति तन्न हर्षहेतुः। अत एव यज्ञाद्यनुष्ठानोत्पन्नश्रद्धस्य विशेष एवोक्तश्रवणकीर्त्तनादिषु फलपर्यन्तप्रवृत्तिहेतुरुच्यते। प्रकृतमनुसरामः। तव प्रकीर्त्या यत् प्रहृष्यति अनुरज्यते च जगत्तत् स्थाने-युक्तम्। तत्र हेतुगर्भं विशेषणं हृषीकेशेति। त्वं हृषीकाणामिन्द्रियाणामीशोऽसि ततो भक्तजनस्येन्द्रियाणि स्वाभिमुखीकरोषीति भावः। रक्षांसि-रागादयो विवक्षिताः, राक्षसानामप्रसक्तत्वात्। नश्यन्तीत्यभिप्रायेणाह—भीतानि दिशो द्रवन्तीति।

---

न चैतकल्पनामात्रमितिपाठः।

सर्वे नमस्यन्ति च सिद्धसङ्घा इति सकलकृतार्थाऽभिवन्द्यो भवतीत्यर्थः। तथा तत्रैव श्रीकृष्णवाक्यम्—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्॥ (अ०१८-५५) इति।

अत्र-भक्त्या साधनभक्त्या श्रवणादिकया, मामभिजानातीति न तत्वज्ञानोक्तिः, तत्वतो ज्ञात्वेति वैयर्थ्यापत्तेः, किन्तु अभीत्याऽऽभिमुख्यम्-अनुराग उच्यते, जानातीति स्फूर्त्तिः। अनुरागेण मामनुभवतीत्यर्थः। स्फूर्त्तेर्विषयभूतां मूर्त्तिमाह यावानिति। परिमाणार्थवत्प्रत्ययसामर्थ्यात्परिमितमायालीलाविग्रहोपहितं स्वरूपं यावानिति निगद्यते। कथं तस्यानुरागस्फूर्त्तिविषयता, तत्राह यश्चास्मि तत्वत इति। आनन्दरूपत्वं तत्वशब्देनोच्यते। अत एव तैत्तरीयकश्रुतौ "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति" (तै०३-६) इतिजगत्कारणं प्रक्रम्य तस्य तत्वनिर्णयवाक्यम्-"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" (तै०३-६) इति आनन्दरूपत्वापरित्यागाद्युक्ता लीलाविग्रहोपहितेऽप्यनुरागस्फूर्त्तिविषयतेतिभावः। एवं मद्भक्तस्यानुरक्तस्य मदनुस्मरणवतः पुंसोऽत एव तत्वज्ञानं भवतीत्याह-ततो मां तत्वतो ज्ञात्वेति। तत इति तच्छब्देन पूर्वमभिजानाति समत्वेन मामितिनिर्दिष्टः प्रधानभूतः परमात्मा निर्दिश्यते।

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इतितच्छब्देनेव दध्यानयनकर्मीभूतं प्रधानं पयः। न च 'यावान्यश्चास्मि तत्वतः' (भ०गी०१८-५५) इत्यनेन व्यवधानम्। तत्राप्यस्मिक्रियाकर्तृत्वेन परमात्मन एव निर्देशात्। यच्छब्दस्य तच्छब्दापेक्षत्वात्। अतश्च मत्तो मां तत्वतो ज्ञात्वा इत्यर्थः 'विशते तदनन्तरम्' इतितच्छब्देन नपुंसकेन तत्वं निर्दिश्यते। अनन्तरमव्यवहितमित्यर्थः। अन्यथा वैयर्थ्यापत्तेरिति। तथा गीतायाम्—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥(अ०१०-८-११)इति।

अत्र भजन्त इति सामान्यत उक्तस्य भजनस्य विशेषोक्तिर्मच्चित्ता इति, स्मरणस्य मद्गतप्राणा इति मद्गतजीवना इत्यर्थः । यद्वा चित्तोपादानान्मद्गतबहिरिन्द्रिया इत्यर्थः । ततश्च श्रवणार्चनादिसङ्ग्रहः । बोधयन्तः-स्मारयन्तः, कथयन्तः-संकीर्त्तयन्तः, तुष्यन्तीति प्रेमभक्तिनिर्द्देशः । रमन्तीति पुनरुक्तिप्रसङ्गाद्विषयविरक्तिर्लभ्यते । 'ददामि भक्तियोगं तम्' इति भगवन्मूर्त्तिस्फूर्त्तिः । तत्वज्ञानस्याग्रे वक्ष्यमाणत्वात्, 'येन मामुपयान्ति ते' इति भगवन्मूर्त्तिस्फुरणस्य परिपक्वस्य भगवत्प्राप्तिहेतुतां दर्शयति । अनुकम्पार्थमिति भक्तानां गुरूपसदनवेदान्तश्रवणाभ्यासादिक्लेशासहिष्णुतोक्तिः । आत्मभावस्थ इति तदीये भक्तिवशीकृतत्वमुक्तम् । तमः-संसारम् । नाशयामीत्युत्तमपुरुषनिर्द्देशादहमेव मेघश्यामः पूर्णब्रह्मात्मना स्फुरामीति । श्रीभागवतेऽपि—

भक्तिः परेशानुभवो विरक्ति-
रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्युः
तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ (स्कं०११-२-४२)
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।

भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥(स्कं०११-२-४३) इति ।

अत्र प्रपद्यमानस्येति साधनभक्त्युपन्यासः । भक्तिः-प्रेमलक्षणा, परेशानुभवो-भगवन्मूर्तिस्फूर्त्तिः । अन्यत्र-गृहादौ विरक्तिः, एष त्रिक एकस्मिन् काले भवति । यथाश्नतो-भुञ्जानस्य. तुष्टिः-सन्तोषः, पुष्टिः धातूनामाप्यायनं क्षुधाध्वंसश्चेत्येष त्रिक एकस्मिन् काले भवति अनुघासं-प्रतिघासं, एवं प्रतिभजनं प्रेमादित्रिके जायमानेऽनुवृत्त्या नैरन्तर्येण, अच्युताङ्घ्रिं भजतो भगवति भक्तिः-परप्रेम यथा प्रह्लादादेः, विरक्तिरपि पूर्णा वान्तकर्त्तुरिव, अन्ते भगवत्प्रबोधः-पूर्णा भगन्मूर्त्तिः-स्फूर्त्तिः कामातुरस्येव स्त्रीरूपस्फूर्त्तिः, एते-त्रयोऽपि भागवतस्य-अनन्यपरस्य भवन्ति । ततः पूर्णभगवन्मूर्त्तिस्फुर्त्तिपरिपाके परां शान्तिं-परमशमात्मकं भगवत्स्वरूपं साक्षात्कृत्य उपैति-प्राप्नोति । पूर्वश्लोकापेक्षया भक्तिर्विरक्तिर्भगवत्प्रबोध इतिव्युत्क्रमाभिधानमेक-कालत्वान्न दोषाय । भगवत्प्रबोध एव परिपक्वः पूर्णानन्दब्रह्मसा-क्षात्कारात्मकतया परिणमत इति तस्य फलावस्थां सूचयितुं चान्ते निवेशः । अत एवाभियुक्ताः—

वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ इति ।

तथा तत्रैव—

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने ।
कामा हृदिस्था नश्यन्ति सर्वे मयि हृदि स्थिते ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि यस्मिन्दृष्टेऽखिलात्मनि ॥
(भाग०११,२०,२९,३०)

अत्र मयि हृदि स्थिते इति प्रेमभक्तिर्मूर्तिस्फूर्त्तिश्च विवक्षिता । कामा हृदिस्था नश्यन्तीति विरक्तिः । भिद्यते इत्यादितत्वसाक्षात्कारः । अत्र सर्वेषु वाक्येषु साधनभक्त्या फलभक्तिविरक्तिमूर्त्तिस्फूर्त्तित्रिकं भगवत्प्रसादः तत्वज्ञानश्चेति प्रणालिका सम्पूर्णा न श्रूयते 'स्थाने हृषीकेश तव' ( भ० गी०११-३६) इत्यत्रानुरागात्मकफलभक्तिमात्रनिर्देशात् । 'भक्त्या मामभिजानाति' (भ०गी०१८-५५) इत्यत्र विरक्तेरनिर्देशाद्'भक्तिः परेशानुभव' इत्यत्र भगवत्प्रसादानिर्देशात्तथापि यत्र योंऽशो न श्रूयते तत्र सोऽनूपसंहर्त्तव्यः । वाक्यान्तरे श्रुतत्वात्"तत्तेजोऽसृजत" (छां०६-२-३) इत्यत्र सृष्टिश्रुतावाकाशवायुवद्भगवत्प्रसादश्च सर्वत्राप्युपसंहर्त्तव्यः, "तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमीशम्" (क०२-२०)"यमेवैष वृणुते तेन लभ्यः" (क०२-२३)

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ (भ०गी०११,६-७)

इत्यादिवचनैर्भगवत्प्रसादस्य तत्वज्ञानहेतुत्वावधारणात् । एवञ्च यत्रापि भक्तेर्मुक्तिहेतुत्वमात्रं श्रूयते, तत्राप्युक्तप्रणालिकोपसंहर्त्तव्या । तदेवं मोक्षहेतुतत्वज्ञाने जनयितव्ये वेदान्तविचारभक्तियोगयोर्द्वारभेदः सिद्धः । कथं तर्हि द्वारभेदे विकल्पः । न हि प्रयाजावघातयोर्दृष्टादृष्टयोर्विकल्पः सम्भवतीत्युक्तमितिचेत् । श्रूयतामवधानेन । दृष्टो हि द्वारभेदेऽपि विकल्पः । यथा ज्योतिष्टोमोद्भिदयागयोः पशुफलकयोः । न हि पश्वर्थिना द्वयं समुच्चयेनानुष्ठेयम् । प्रयाजावघातयोस्त्वेकप्रयोगविधिपरिगृहीतत्वादविकल्पः । व्रीहियवयोस्तु सत्यप्येकविधिपरिगृहीतत्वे द्वारैक्याद्विकल्पः । हरिभक्तिवेदान्त-

विचारयोस्तु नैकप्रयोगविधिपरिग्रहः, तस्माद्विकल्प एव। ननु किं विकल्पेन, समुच्चय एवास्तु । न। मानाभावात्। न हि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति षरणां यागानामिव तयोः समुदयादेकं किञ्चिदुपलभ्यते । किञ्च स हि अङ्गप्रधानभावेन वा समप्रधान्येन वा । नाद्यः हरिभक्तिरङ्गं वेदान्तविचारः प्रधानमित्यत्र श्रुतिलिङ्गाद्यभावात्, "तमु स्तोतारः पूर्व्यं यथा विद" इत्यादिवाक्येन तत्वज्ञानाङ्गत्वात् । उपकारकत्वमङ्गमाश्रित्य चतुर्लक्षणयात्मको विचारो हरिभक्तेरङ्गमिति वक्तुं शक्यते । हरिभक्तिप्राप्त्ये भगवत्स्वरूपे वेदान्तानां समन्वयः प्रथमेऽध्याये, तत्रैव प्रमाणान्तराविरोधो द्वितीये, हरिभक्तिसाध्यं तत्वज्ञानात्मकं साधनं तृतीये, परब्रह्मानन्दावाप्तिफलं चतुर्थे, न तु विपरीतोऽङ्गप्रधानभावः कथमपि शक्यो वक्तुम्। न द्वितीयः। अधिकारभेदात। अतिविरक्तो वेदान्तविचारेऽधिकारी यः खलु 'अथातो ब्रह्मजिज्ञासा' ( वे० सू०१-१-१ ) इतिसूत्रे अथ शब्देनोच्यते । भक्तियोगे तु ईषद्विरक्तोऽधिकारी 'न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः' । (भाग० ११-२०-८) इतिवचनात्। समप्राधान्येन समुच्चयो ह्याग्नेयादिवत्तुल्यधिकारप्रसङ्गात्।

ननु ईषद्विरक्तस्य भक्तियोगाधिकारे कथं तत्वसाक्षात्कारोदयः। इषदासक्तेः सत्वात्। किञ्च सकृदनुष्ठितो भक्तियोगस्तत्वसाक्षात्कारहेतुरावृत्तो वा । नाद्यः । तथा सति 'को न मुच्येत' इतिमुक्तेः सर्वसुलभत्वप्रसङ्गात्। न द्वितीयः। कियत्यावृत्तिरित्यपरिज्ञानात्। उच्यते। न हि भक्तियोगस्य सकृदनुष्ठानमात्रेण तत्वसाक्षात्कारं ब्रूमः। येनेषदासक्तेन तत्प्रतिबन्धः सम्भाव्येत। किन्त्वावृत्तेन तेन, 'इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या' इत्यादिवचनात् । आवृत्तेरवधिरपि'भक्तिर्विरक्तिर्भगवत्प्रबोधः' (भा०११-२-४३)इत्यनेनोक्तः । ततश्च यावत् परमात्मनि परमप्रेमास्पदे पूर्णा प्रीतिः, पूर्णा च विषयविरक्तिः, पूर्णा च भगव-

न्मूर्तिस्फूर्तिः । स च भगवान् सन्तुष्टः सन् पूर्णब्रह्मात्मना साक्षादाविर्भवति तावद्भगवद्भजनानुवृत्तिः कर्त्तव्येति विज्ञायते । ततो न किञ्चिद् दूषणम् । नन्वेतन्न मन्यन्ते । सत्सु वचनेषु यदि न मन्यन्ते तर्हि नास्तिकाः । तेषां वचनानामन्योऽर्थ इति चेन्न । श्रौतमर्थं विहाय लक्षणाकल्पने मानाभावात् । किञ्च यद्येतन्न मन्यते ततो वेदान्तविचार एव मननादिसहकृते वासुदेवभक्ता अधिक्रियन्त इति वक्तव्यम् । तन्न सङ्गच्छते । तथाहि । ते विषयवैराग्येऽनुत्पन्ने वेदान्तविचारेऽधिक्रियेरन्नुत्पन्ने वा । नाद्यः । विरक्ताधिकारप्रतिपादनविरोधात् । न द्वितीयः । 'इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः' इति वचनात् । तस्यामवस्थायां भगवति पूर्णभक्तिमतो भगवदेकस्फुरणवतश्च तस्य—

एवंव्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ॥

इतिसंसारधर्मातीतावस्थां गतस्य नानालौकिकसाधनापेक्षवेदान्तविचारकर्त्तव्यतानुपपत्तेः । किञ्च भक्तस्य मोक्षाकाङ्क्षासत्वेऽपि फलभक्त्यवस्थायां मोक्षेऽप्याकाङ्क्षाविरहान्मुमुक्षुवदधिकारकवेदान्तकर्त्तव्यता न युज्यते । न हि स्वर्गकामनाशून्याः काम्येष्वप्यग्निहोत्रादिष्वधिक्रियन्ते ।

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनाऽन्यत् ॥ (भाग० ११-१४-१४)

इत्यादिपुराणवाक्येषु हि भक्तानां मोक्षाकाङ्क्षाविरहः श्रूयते। अमुमुक्षूणां कथं भक्त्यापि मोक्ष इति चेन्न। नानापुराणवचनावगत-भक्तवत्सलत्वश्रुत्या भगवानेव तादृशानां संसारक्लेशासहिष्णुर्मोक्षं प्रयच्छतीति गम्यते।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। (भ०गी०१२-७)
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ (भ०गी०१०-११)

इत्यादिवचनाच्च भगवानेव तादृशानां मोक्षं प्रयच्छतीति गम्यते। मोक्षाकाङ्क्षाविरहवाक्यानां मोक्षप्रतिपादकवाक्यानाञ्चाविरोधानुरोधेनानुषङ्गिकत्वं मोक्षस्य कल्प्यते। अन्यथा केषांचिदप्रामाण्यापत्तेः। उपपन्नश्च भक्तानां मोक्षाकाङ्क्षाविरहो भगवत्यासक्तत्वात्। एतावती कुतो भगवत्यासक्तिरितिचेत्। शृणु। परप्रेमास्पदत्वात्, तदपि, परमानन्दरूपत्वात्। ननु निर्गुणस्य ब्रह्मणः परमानन्दरूपत्वं श्रूयते न तु सगुणस्य भगवतस्तत्सम्भवति। कथं न संभवति। यतो निर्गुणमेव परं ब्रह्म सगुणतामापद्यते मायया, न तु परमानन्दरूपतां परित्यज्य, नित्यसिद्धत्वात्। ननु विद्यमानापि परमानन्दरूपता मायया्ऽऽवृतेति कथं सा स्फुरेत्, अस्फुरणे च कथं भगवत्यासक्तिः। सत्यमितरेषां न स्फुरति। श्रवणकीर्त्तनादिना भक्तिपरिपाके परमानन्दांश आवरणशक्तिर्नश्यति। वेदान्तश्रवणादिपरिपाक इव प्रपञ्चपारमार्थिकसत्वसम्पादनपटीयसी शक्तिः। कथमन्यथा भगवन्निष्ठस्य प्रेमभक्तस्य मोक्षेऽप्याकाङ्क्षाविरहः श्रूयमाणः संपद्येत। प्रत्यगभेदावरणशक्तिस्तु विद्यत एव, भगवति प्रेमभक्तेः परिच्छिन्नस्फूर्त्तेश्च सत्वात्। सापि सक्तिर्भगवदनुग्रहात्तत्वसाक्षात्कारोदये सहाश्रयेण निवर्त्तते। सर्वथा सिद्धमेतद् वासुदेवभक्तानां गुरूपसर्प-

णवेदान्तविचारमनननिदिध्यासनादौ नाधिकार इति । अतश्च ज्ञानमार्गो भक्तिमार्ग इति मोक्षे मार्गद्वयम् । अत एव गीतासूदित-होमप्रकरणेऽनुदितहोमनिन्दावत् भक्तिप्रस्तावे निर्गुणनिष्ठा निन्द्यते ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥(भ०गी०१२,२-५)इति ।

ननु भक्तिमार्गस्य स्वतन्त्रत्वेऽपि न ज्ञानं विना मुक्तिः । "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इतिश्रुतेः । तत्र च किं करणं ? । वेदान्तविचाराभावेऽनवधृततात्पर्यस्य वेदान्तवाक्यस्य करणत्वानुपपत्तेः । उच्यते । हरिभक्तिरेव करणम् ।

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ।
तदा यत्नेन महता कुरु गोविन्दकीर्त्तनम् ॥

इत्यादिवचनेभ्योऽसाधारणकारणत्वावेदनात् । अथवा भक्ति-प्रसन्नो भगवानेव तत्वज्ञाने कारणम् ।

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ (भ०ग०१०-११)

इत्यादिवचनात्। कर्तृव्यापारव्याप्यत्वं तु भक्तिवशीकृतत्वादिति। यद्वा श्रवणादिभक्त्या सततमनुवर्त्तमानया सर्वतो विरक्तं भगवति पूर्णानुरक्तं तन्मूर्त्तिस्फूर्त्तिशीलं तदनुगृहीतं चित्तमेव तत्वज्ञाने कारणम। अथवा तादृश्यामवस्थायां सततं परिशील्यमानं कृष्णादि नामैव तत्वसाक्षात्कारे करणम्। श्रवणादिपरिपाके वेदान्तवाक्यमिव।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥

इत्यादिवचनैः कृष्णादिनाम्नां तत्वनिरूपकत्वात्। अत एव वाराहपुराणे—

पेयं पेयं श्रवणपुटके रामनामाभिधानं
ध्येयं ध्येयं मनसि सततं तारकब्रह्मरूपम्।
जल्पन् जल्पन् प्रकृतिविरतौ प्राणिनां कर्णमूले
वीथीं वीथीमटति जटिलः कोऽपि काशीनिवासी॥

इति काशीमरणे स्वधर्मस्य भगवान्महेशो रामनामैवोपदिशतीति प्रतिपाद्यते। रामनाम्नोऽपि—

रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥

इति परब्रह्मप्रतिपादकत्वात्। यद्वा भक्तिप्रसन्नो भगवान्भक्तेभ्यस्तत्वमुपदिशतीति तद्वाक्यमेव तत्वज्ञाने करणम्। सर्वथा सिद्धमेतन्मुक्तौ मार्गद्वयमिति।

नन्वेवं तृतीयो मार्गः स्यात् । यज्ञादीनामपि "विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इतिवाक्येन ज्ञानार्थत्वावेदनात् । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ०गी० ३-२०) इतिवचनाच्च । ततश्च यज्ञादिभिरपि निरपेक्षैस्तत्वज्ञानद्वारा मुक्तिः प्रसज्येत । अत्रोच्यते। नात्र वाक्ये ज्ञानार्थतया विधानं यज्ञादीनां "विविदिषन्ति" इति वेदनस्य सन्प्रत्ययोपसर्जनस्याख्यातार्थान्वयाभावात् । न ह्यन्योपसर्जनमन्यत्रान्वेति ।'यज्ञेन' इत्यादितृतीया समभिव्याहारसामर्थ्यवशेन विविदिषाया एवाख्यातार्थे भावनया कर्मत्वेनान्वयात्, यज्ञेन विविदिषां भावयेदिति । सन्प्रत्ययार्थश्च निकृष्टा इच्छा न त्वीप्सितत्वम् । तस्माद्यज्ञादीनां विविदिषार्थत्वमेव न ज्ञानार्थत्वम् । येषामप्ययमाग्रहः, तेषामपि न मार्गान्तरम् ।

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ (भ०गी०६-३)

इत्यादिवाक्यवशेन विवेकवैराग्यादिसाधनसम्पत्तिसंन्यासपूर्वकश्रवणादिप्रणालिक्यैव कर्मणां ज्ञानार्थत्वात् । 'कर्मणैव हि संसिद्धिम्' इतिवाक्ये संसिद्धिशब्देन चित्तशुद्धेर्विवेकादिरूपोक्तप्रणालिकया मुक्तेरभिधानात् । भक्तेस्तु ज्ञानार्थत्वं पूर्वोक्तप्रणालिकावेदकबहुपुराणवाक्यावगतं नापह्नोतुं शक्यते । अत एव

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥(भा०ग०११-२०-६)

इति मार्गद्वयशेषत्वं कर्मणां विज्ञायते । नन्वेवं वेदान्तशास्त्रस्याप्रामाण्यप्रसङ्गः । किमुच्यते । न तावद्वेदान्तवाक्यानामप्रामाण्यम् ।

अखण्डात्मकब्रह्मप्रतिपादकत्वात्। विचारस्य तु प्रामाण्यं नाश्रीयते कैरपि। पाक्षिकत्वन्तु अधिकारिभेदेनाश्रीयत एव। तत्सिद्धं विष्णुभक्तेः फलभक्त्यादिप्रणालिकया मुक्तिः फलमिति। एवं शिवभक्तेरपि, समानन्यायत्वात्। ये तु विष्णोरुत्कर्षेण शिवापकर्षाभिनिवेशिनः, ये च शिवोत्कर्षेण विष्णोरपकर्षाभिनिवेशिनस्ते उभयेऽपि न भक्ता इति मन्तव्यम्। पुराणेषु तु तादृशानां नरकश्रवणात्। 'रौरवादिषु घोरेषु नरकेषु पतन्त्यधः' इति।

अन्ये तु भक्तिप्रसन्नो भगवान् भक्तेभ्यो वेदान्तवाक्यमेवोपदिशतीति भक्तेर्वेदान्तश्रवणेन सह समुच्चय एव, विकल्पस्यायुक्तत्वादिति वदन्ति। तत्तु भक्तानामीषद्विरक्तानां परिपक्वानाञ्चामुमुक्षूणां वेदान्तश्रवणाऽनधिकारात्तथास्तु नाम, न तु भक्तानां वेदान्तश्रवणाद्यभ्यासक्लेशाश्रयणमिति भक्तेर्मुक्तिहेतुत्वं न निह्नोतुं शक्यत इति सिद्धं मुक्तिः फलमिति।

अथ फलान्तरविचारः प्रस्तूयते। ननु फलान्तराण्यपि श्रूयन्ते। यथा विष्णुपुराणे—

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव॥

इत्यादिभिर्बहुवचनैः पापक्षयः श्रूयते। तथा—

आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम्।

इति शोभनावाप्तिः फलम्।

दन्ता गजानां कुलिशाग्रनिष्ठुराः
शीर्णा यदेतेन बलं ममैतत्।

महाविपत्पातकनाशनोऽयं
जनार्द्दनानुस्मरणानुभावः ॥

इत्यादिभिर्विपन्नाशः ।

तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ।
न याति नरकं शुद्धः स क्षीणाऽखिलपातकः ॥

इत्यादिभिर्नरकेष्वगमनम् । एतदर्थकान्येव पुराणान्तरवचनानि श्रूयन्ते बहूनि । तथा ब्रह्मपुराणे—

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाभिरोचते नाम तत्सर्वार्थेषु योजयेत् ॥

इतिवचनेन सर्वार्थता श्रूयते । हेमाद्रौ कालखण्डे प्रान्तभागे विष्णुधर्मोत्तरे तत्तनाम्नां देशकालविभागं प्रतिपाद्य—

सर्वाणि नामानि जनार्द्दनस्य
कालश्च सर्वः पुरुषप्रवीर ।
तस्मात्सदा सर्वगतस्य राजन्
सर्वेषु कार्येषु जपेत भक्त्या ॥ इति ।

तान्येतानि फलानि फलभक्त्यादिप्रणालिकया मोक्षफलवद्यज्ञाद्यनुष्ठानजन्यश्रद्धाविशेषवत एव भवन्ति, उत तदनपेक्षाणि । उच्यते । भगवन्नामोच्चारणेन पापक्षये तावच्छ्रद्धासामान्यं नापेक्षते कुतस्तद्विशेषापेक्षा । 'अवशेनापि' इत्यभिधानात् ।

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्त्तितमघं पुसां दहेदेधो यथानलः ॥

इतिविष्णुधर्मेष्वभिधानाच्च । न चार्थवादत्वं स्तुतिलक्षणाप्रसङ्गात् । भागवतेऽपि—

साङ्केत्यं परिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥

इतिवचनपर्यालोचनया न श्रद्धापेक्षत्वं पापक्षये । अत एवाजामिलस्य पुत्रसंकेतितनारायणनामग्रहणे विष्णुदूतैर्यमदूतानामपाकरणम् ।

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वत्ययनं हरेः ॥(भाग०६-२-७) इति ।

ये त्वत्र केचिन्म्रियमाणत्वं नामोच्चारणस्य पापक्षयसाधनत्वेऽधिकारिविशेषणमित्याहुः । तन्न । किमिदं म्रियमाणत्वं ? मरणक्षणसम्बन्धो वा, मरणाव्यवहितपूर्वकालसम्बन्धो वा, मरणपूर्वकालसम्बन्धो वा । नाद्यः । तदानीं नामोच्चारणासम्भवात् । अत एव न द्वितीयोऽपि । न तृतीयः । जीवतोऽपि नामोच्चारणं पापक्षयहेतुरिति प्रसज्येत । तस्मान्नाजामिलवन्म्रियमाणत्वमधिकारिविशेषणम् ।

अपरे तु नामोच्चारणस्य सर्वपापक्षयहेतुत्वं बहुषु पुराणेषु श्रूयते, तच्च यदि सकलजनसाधारणं तदा द्वादशाब्दादिप्रायश्चित्तविध्यानर्थक्यम् । न ह्यनायाससाध्यं नामोच्चारणं त्यक्त्वा कोऽपि तत्र प्रवर्त्तेत । तस्मादत्यन्तं ये वासुदेवभक्ताः कामक्रोधादिशून्यास्तद्विषयो नामोच्चारणविधिः । इतरेषां द्वादशाब्दादिविधिरिति । अत एव

केचित्केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कात्स्न्र्येन नीहारमिव भास्करः ॥
(भाग०६-१-१५) इति ।

तदयुक्तम् । वासुदेवापरायणोऽप्यधिक्रियते न तु स एव ।

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वत्ययनं हरेः ॥ (भाग०६-२-७)

इत्यादिबहुवचनविरोधात् । अत्र ह्यजामिलाधिकारः । न चाजामिलस्य वासुदेवपरायणत्वम्, बहुदोषित्वावधारणात् । एवं क्षत्रबन्धुप्रभृतीनां गोविन्दनामोच्चारणात् पापक्षयः श्रूयते—

गोविन्देति समुच्चार्य पदं क्षपितकल्मषः ।
क्षत्रबन्धुर्विनष्टात्मा गोविन्दत्वमुपेयिवान् ॥ इति ।

'केचिद् केवलया' इत्यादिवाक्यन्तु वासुदेवपरायणानां मुक्तिप्रतिपादनपरं कात्स्न्र्येनेत्युपादानात् । कात्स्न्र्यं हि सवासनक्षय इति । द्वादशाब्दादिप्रायश्चित्तविध्यानर्थक्यन्तु नास्ति । नामोच्चारणस्य पापक्षयसाधनत्वे श्रद्धाशून्यानां द्वादशाब्दादिप्रायश्चित्ताधिकारः, नामोच्चारणे तु श्रद्धावतामश्रद्धावताञ्चाधिकारः । तथा हि । न तावन्नामोच्चारणे विधिरेव नास्तीत्युक्तम्, विधेश्च फलाकाङ्क्षायामार्थवादिकः पापक्षयः फलमित्यप्युक्तम् । नचाधिकारावच्छेदः श्रूयते, प्रत्युत सर्वाधिकारत्वं श्रूयते—

स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ इति ।
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः ।
यत्र तत्रानुकुर्वन्तो विष्णोर्नामानुकीर्तनम् ॥

७

सर्वपापविनिर्मुक्तास्तेऽपि यान्ति सनातनम् ॥ इति ।

पापक्षयकामनाया अभावेऽप्युच्चारितं नामधेयं पापं क्षपयति 'अज्ञानादथवा ज्ञानाद्' इत्यादिवचनप्रामाण्यात् । तस्मात्सर्वेषां नामोच्चारणेन पापक्षय इति सिद्धम् ।

भगवद्भक्तिविवेकः सोऽय—
मनेकप्रकारकोऽभिहितः ।
तुष्यतु यदुपतिरमुना
कथमपि यमुनातटस्थायी ॥

इति श्रीमदापदेवसुनुनानन्तदेवेन कृते भगवद्भक्तिनिर्णये हरिभक्तिकर्त्तव्यतानिरूपणं नाम द्वितीयं प्रकरणम् ॥
समाप्तश्चायं ग्रन्थः ॥



परिभाव्य विभूतभव्यमेनं
भगवद्भक्तिविवेकमेकबुद्ध्या ।
भगवद्भजने भजन्सुभावं
भजतां भावुकमत्त्वयं मुमुक्षुः ॥ १ ॥
द्युलोकसुखवाञ्छया मखमखण्डमातन्वताम्
नितान्ततनुतानवावहमिहावहन्तां तपः ।
मनो जनकनन्दिनीपतिपदारविन्दद्वयी—
मरन्दरसलालसं चिरमिदं मदीयं पुनः ॥२॥
सैव प्रौढा विरक्तिः सुचरितरचनासंप्रयुक्तिः प्रसिद्धा
सैवान्तःसंशयादित्त्वयकृदुपनिषत्तत्त्वविद्या प्रसक्तिः ।
बोधव्यक्तिश्च सैव प्रकटितपरमानन्दसर्वस्वभुक्तिः ।
सैवाद्वैता च मुक्तिः कथमपि कमलाकामुके या तु भक्तिः॥३॥
शरनवतिथिमितशाके
नभःसितस्कन्दबुधवारे ।
भगवद्भक्तिविवेकं
बुधो जगन्नाथनामको व्यलिखत् ॥ ४ ॥

श्रीगोपालकृष्णप्रसन्नोऽस्तु । ॥ शिवं ॥ श्रीकाश्यां बिन्दुमाधव-
सन्निधावयं भक्तिनिर्णयग्रन्थो रामचन्द्रकृतलेखनेन
फाल्गुनशुक्लैकादश्यां समाप्तः ॥ शके १७६३
संवत् १८९८ । ॥ शुभमस्तु ॥



# प्रथमं परिशिष्टम् ।

## भक्तिनिर्णयस्थानां ग्रन्थादिनाम्नां संकलनम् ।



इति ग्रन्थादिनाम्नां संकलनम् ।

# द्वितीयं परिशिष्टम्।

## प्रमाणतयोद्धृतश्रुत्यादीनां प्रतीकसंकलनम्।

इति श्रुत्यादिप्रतीकसंकलनम् ।

# तृतीयं परिशिष्टम् ।

## अथात्रत्यभक्तिमाहात्म्यबोधकानां श्रुत्यादीनामकारादिक्रमेणानुक्रमणिका

इति श्रुत्यादीनामनुक्रमणिका ।

# अथ शुद्धाशुद्धबोधकपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठम् । | पङ्क्तिम् । | अशुद्धम् । | शुद्धम् । | पृष्ठम् । | पङ्क्तिम् । |
|---|---|---|---|---|---|---|---|
| पुरुसुक्ते | पुरुषसूक्ते | २ | १ | च्छ्रादि | च्छ्रादि | २८ | २२ |
| निन्द्य | निन्द्यं | २ | २० | सन्यासः | संन्यासः | २८ | २२ |
| वाक्यफलं | यागफलं | ७ | २० | जीवते | जीवेत | ३० | २० |
| तारतम्यम्–न | तारतम्यम् | ८ | ४ | वृहन्ना | बृहन्ना | ३० | २१ |
| याजस्य | यागस्य | १० | २ | व्रह्मा | ब्रह्मा | ३१ | २२ |
| त्रैवणि | त्रैवर्णि | १० | १४ | भक्त | भक्ते | ३४ | १३ |
| भजयेयु | भजेयु | १३ | १० | मुच् | मुच् | ४२ | २ |
| कर्तृणां | कर्तृणां | १६ | ६ | तीया स | तीयास | ४५ | ७ |
| अम्यथा | अन्यथा | १६ | ७ | भावनया | भावनायां | ४५ | ८ |
| प्राथसि | पाथसि | २० | ५ | निह्नोतुं | निह्नोतुं | ४६ | १२ |
| शुष | शूष | २१ | ६ | त्रस्तै | त्रस्तै | ४६ | १७ |
| सेव्य | सेव्य | २१ | १८ | ममैत् | ममैतत् | ४६ | २२ |
| इत्यन्यत्र–इति । अन्यत्र | | २२ | १५ | परिहास्यं | पारिहास्यं | ४८ | ३ |
| नार्हन्ति | नार्हति | २५ | ५ | सुनुना | सूनुना | ५० | ६ |
| मवद्ध | मबद्ध | २६ | २० | विभूत | विभूति | ५१ | १ |
| पापनु | पापानु | २७ | १५ | कृष्ण | कृष्णः | ५१ | १७ |

इति शुद्धाशुद्धबोधकपत्रम् ।

श्रीः ।

# प्राथमिकं निवेदनम् ।

अथेदं प्रकाश्यते श्रीमदाश्रमस्वामिविरचितं वैष्णवकण्ठाभरणीयं नाममाहात्म्यम् । वैष्णवकण्ठाभरणनामा ग्रन्थो नाममाहात्म्याद्यनेकप्रकरणयुतो भक्तिशास्त्रीयो भवेदिति केवलमनुमातुं शक्यते । यतो ग्रन्थकारेण ग्रन्थान्ते 'वैष्णवकण्ठाभरणे नाममाहात्म्यं समाप्तम्' इत्युक्तं, ग्रन्थमध्ये च 'कायव्यूहस्य निराकरिष्यमाणत्वेन' इत्याद्युक्तिरुपलभ्यते निराकरणं च नोपलभ्यतेऽतो नाममाहात्म्यातिरिक्ते वैष्णवकण्ठाभरणीयभागे तस्य निराकरणं स्यादित्यनुमितायामप्यनुलब्धग्रन्थभागसत्तायां ग्रन्थस्य सर्वाङ्गपरिपूर्णोपलब्धिर्नैव भवतीति महद्दुःखस्थानम् । सर्वनाममाहात्म्यबोधकग्रन्थापेक्षयास्य ग्रन्थरत्नस्य विलक्षणवैशिष्ट्यं यावज्जीवं करिष्यामीति संकल्पितस्यार्चनादिकस्य स्थाने तत्कर्तुमशक्तस्य पुरुषस्य कृते कलौ केशवकीर्तनस्यैव प्रतिनिधिरूपेण बोधितत्वेन, नामोच्चारणस्य प्रदोषमग्निहोत्रमितिवत्प्रातर्निशि तथेतिपुराणवचनेन नियतकालादिबोधकत्वेन, अनेकफलकमपि नामोच्चारणं दोषवर्जितं चेत्सफलं भवतीति निश्चायकत्वेन च पार्थक्येन दरीदृश्यते । प्रायो नामजापकाः सर्वेऽप्याधुनिकाः स्वाश्रमविहितकर्मत्यागिनो वेदनिन्दापरा अपि नाम्न एव सर्वदोषनिराकरणपूर्वकं परमेश्वरसायुज्यादिसकलमुक्तिप्रदत्वमिति मन्वते । प्रतिपादयन्ति च साग्रहं सर्वत्र । तैरवश्यं 'श्रीभगवन्नामकीर्तनं कुर्वतापराधाः सर्वथा परिहर्तव्याः' इत्यादि सप्रमाणं ग्रन्थकारोक्तं विशेषतः संचिन्तनीयम् । अस्तु ।

अत्रोपलब्धनाममाहात्म्यबोधकपद्धतेः श्रीलक्ष्मीधररचित-भगवन्नामकौमुद्या अनुसारित्वेनायं ग्रन्थो भगवन्नामकौमुद्या अनन्तरं जातो ग्रन्थकारश्च विद्वद्वरलक्ष्मीधरसमयादनन्तरं जात इत्येव केवलं कल्पयितुं शक्यते। तथा ग्रन्थस्थविषयावलोकनेन भक्ति-शास्त्रे, मीमांसायां, कर्मकाण्डे, पुराणादिषु चास्य विद्वद्वराश्रमस्वा-मिन, उत्कटं पाण्डित्यं स्यादिति वक्तुं पार्यत इतोऽधिकं ग्रन्थकार-विषय इतिवृत्तं नोपलभ्यते। विद्वद्वरैरैतिह्यचतुरैरन्यतोऽन्वेषणीयम्।

प्रकृतग्रन्थस्यैकमेव पुस्तकं काशीस्थराजकीयसरस्वतीभवनत उपलब्धं तदवलम्ब्य यथामति संशोध्य विदुषां पुरत इदं ग्रन्थरत्नं निधीयते। अत्र सीसकाक्षरयोजकादितो जाताशुद्धीर्निरस्यात्रत्यान् गुणानास्वादयन्तु विद्वद्वरा भक्तिशास्त्रतत्परा इति संप्रार्थयते—

गवर्नमेंट संस्कृत कॉलेज
कार्तिकशुद्धचतुर्थी
संवत् १९९४, काशी।

श्रीअनन्तशास्त्री फडके
व्याकरणाचार्यो मीमांसातीर्थश्च।

# वैष्णवकण्ठाभरणे

## विषयसूचिका ।

विषयः — पृष्ठम्





श्री१००८भैरवाय नमः ।

## श्रीमदाश्रमस्वामिविरचिते

## वैष्णवकण्ठाभरणे

# नाममाहात्म्यम् ।

---*---

यदा अर्च्चनादिकं यावज्जीवं करिष्यामीति सङ्कल्प्य पश्चात्कर्तुं न शक्नोति तदा अर्च्चनादिप्रतिनिधित्वेन विहितं श्रीहरिकीर्त्तनमेव कर्त्तव्यम्, यथा "यःसत्रायावगुरते स विश्वजिता यजेत" इत्यत्र सत्रसंकल्पं कृत्वा सत्रयागं कर्त्तुमसमर्थस्य तद्दोषनिर्हरणद्वारा तत्फलकामस्य विश्वजित् प्रतिनिधित्वेन विहित इति स तेनानुष्ठीयते । तथा—

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥

इति विष्णुपुराणवचनादर्चनादिफलसाधनत्वेन हरिकीर्तनस्य विधानात् । न च अर्चनादेर्यावज्जीवकर्तव्यत्वे प्रमाणाभावः ।

पूजयेद् भावयुक्तेन यावज्जीवं प्रतिज्ञया ।

इतिकूर्मपुराणवचनात् ।

ततः प्रभृतिकालाच्च पूजां विष्णोः समाचरेत् ।

प्राणात्ययेऽपि विप्रेन्द्र रद्गोल्लोपात्प्रयत्नतः ॥

इतिपाञ्चरात्रवचनात् ।

वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा ।
नत्वनभ्यर्च्य भुञ्जीयाद् भगवन्तं सदाशिवम् ॥

इति लिङ्गपुराणवचनाच्च । किञ्च गोविन्दनामोच्चारणं क्षत्रबन्धव उपदिश्य 'तत्तवोपकाराय भविष्यत्यनुलिप्यताम' इति विष्णुधर्मेऽभिधानाच्च । यावज्जीवं कर्त्तव्यं भगवन्नामकीर्तनं "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यत्र सामस्त्यरूपजीवनविशेषे निरन्तरानुष्ठानप्राप्तौ "प्रदोषमग्निहोत्रं होतव्यं व्युष्टायां प्रातः" इत्यादिना नियतः कालो विधीयते, तथा

प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन् ।

इति विष्णुपुराणवचनेन

उत्तिष्ठता प्रस्वपता प्रस्थितेन गमिष्यता ।
गोविन्देति सदा वाच्यं क्षुतप्रस्खलनादिषु ॥

इतिविष्णुधर्मवचनेन च नियतकालविधानान्नाशक्यानुष्ठानत्वम् । अत्र विनात्यन्तं शुचित्वाद्यादरः—

चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत् ।
नाशौचं कीर्तने तस्य स पवित्रकरो यतः ॥

इति विष्णुधर्मोत्तरवचनात् । अत्र च श्रद्धाभक्त्योर्विकल्पेनाङ्गत्वम् ।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ (भ०गी०१७-२८)
यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

इत्यादिवचनेभ्यः । श्रद्धातंदभावयोरेकत्रानङ्गत्वाद् ग्रहणाग्रहणवद्द विकल्पः । भावाभावयोरतुल्यकक्षत्वाच्छ्रधायां फलातिशयः कल्पनीयः। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इतिश्रुतेश्च, श्रद्धायां स निश्चीयते तस्मात् कल्यः । श्रद्धया प्रसङ्गतो वा श्रीवासुदेवनाम कीर्तयन् कृतार्थो भवति ।

ननु कर्माङ्गभगवन्नामकीर्त्तनम् ( न कृतार्थताप्रयोजकम् )—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

इतिस्मृतेः । न च फलश्रवणविरोधः । "न स पापं श्लोकं शृणोति" इतिवदर्थवादत्वात् । विधीयमाना पर्णता यथा अपापश्लोक-श्रवणेन स्तूयते तथा कर्माङ्गभूतस्य हरिनामकीर्तनस्य स्तुतिः, पापक्षयस्तुतिरिति । मैवम् । 'एकस्य तूभयत्वे संन्योगपृथक्त्वम्' (जै०सू०४-३-५)इतिन्यायेन कर्माङ्गत्वेऽपि खादिरतायाइव फलार्थत्वा-विरोधात्।न च कर्माङ्गनामकीर्त्तनस्तुतिपरं फलवचनमिति शक्यं वक्तुम्। विध्येकवाक्यत्वाभावात् । 'विधिना त्वेकवाक्यत्वात्' (जै०सू०१-२-७) इतिन्यायात् । 'यस्य स्मृत्या' इत्यादि कर्माङ्गत्वविधायकं वाक्यमन्यत्र, अन्यत्र च फलवचनमिति नैकवाक्यत्वम्,फलवचनानामनारभ्याधीत-त्वादत एवोपनिषदां न क्रत्वर्थकर्तृस्तावकत्वम्। न चानारभ्याधीत-पर्णतायाः क्रत्वर्थत्वेन तदेकवाक्यत्ववत्फलवचनानां क्रत्वङ्गनाम-कीर्तनैकवाक्यत्वमितिवाच्यम् । जुह्वां पर्णताविधानस्यानर्थक्यात्, क्रत्वपूर्वसाधनलक्षणया तत्रैव पर्णताविधानाद्युक्तं तदेकवाक्यत्वम्।इह तु हरिनामकीर्तनमात्रस्य अनाश्रितस्य फलार्थत्वेन विधानात्

वैयर्थ्याद्यभावान्न लक्षणाश्रयणम्। किञ्च फलश्रुतेरर्थवादतायामस्मिन्वाक्ये किं विधेयं यस्य फलवचनं स्तावकम्। क्रतूपस्थापकपदाभावेन तदङ्गत्वेन नामकीर्तनविधानानुपपत्तेः। भाव्याकाङ्क्षिणो नामकीर्तनविधेः श्रूयमाणं फलमेव भाव्यत्वेन कल्प्यते, पर्णताविधौ तु क्रतूपकारस्यैव भाव्यत्वान्न फलमाकाङ्क्षत इति भवति फलश्रुतिरर्थवादः । अपि च पापश्लोकश्रवणादयुक्तमर्थवादत्वम्। क्रत्वर्थत्वेन पर्णताया विधीयमानत्वेन तदेकवाक्यत्वात्। न चोभयविधानम् वाक्यभेदप्रसङ्गात्। इह तु नान्यद्विधेयमस्ति येन तत् स्तूयेत कर्माङ्गनामकीर्तनं दूरस्थमतो न तेनैकवाक्यत्वमिति फलविधिरेव। न च विध्यश्रवणादर्थवादत्वम्। रात्रिसत्र इवार्थवादस्यैव शक्तिद्वयकल्पनात्, विधिविभक्तिश्रवणस्य रात्रिसत्रवाक्येऽपि तुल्यत्वात् न च विध्यश्रवणमपीत्यनुपदमेव वक्ष्यामः। किञ्च यद्यकत्र कर्माङ्गत्वेन श्रुतमिति पुरुषार्थत्वं व्याहन्येत तर्हि खादिरतायामपि तन्न स्यात्। "खादिरो यूपो भवति" इति क्रत्वर्थत्वेन श्रवणात्। "खादिरं वीर्यकामस्य" इतिफलवचनमर्थवादमात्रमिति स्यात्तथा सति 'एकस्य तूभयत्वे' इतिन्यायोच्छेदः। न च कर्मासम्बन्धाद् विधिप्रत्ययश्रवणाच्च फलविधिरेवायं नार्थवादः। अत एव पर्णमय्यधिकरण इदं कामपदरहितानामर्थवादत्वमुक्तमिति वाच्यम्। तथा सति रात्रिसत्रस्य प्रतिष्ठाफलत्वं न स्यादुभयाभावात्। जातेष्ट्यादीनां पूतत्वादिफलत्वं च न स्यात् कामपदाश्रवणात्। न च तत्कल्पनम्, तस्यात्रापि नामकीर्तनवाक्ये सम्भवात्। न च पापश्लोकश्रवणेऽपि तत्कल्पनापत्त्या पर्णमय्यधिकरणविरोध इति वाच्यम्। वाक्यभेदेन फलत्वनिराकरणे तत्कल्पनानवकाशात्। कामपदाभावेऽपि नार्थवादत्वकल्पनमभ्युच्चयमात्रमिति न किञ्चिदनुपपन्नम्। वस्तुतस्तु नेह कामविधिविभक्त्योरत्यन्तदुर्भिक्षता, विष्णुधर्मे शतशो दर्शनात्।

रामः परशुरामश्च नृसिंहो विष्णुरेव च ।
विक्रमश्चैवमादीनि जप्यानि विजिगीषुभिः ॥
अच्युतं चामृतं चैव जपेदौषधकर्मणि ।
भ्राजिष्णुमग्रहाने च जपेदालम्बनस्थितम (?) ॥
विद्यामभ्यस्यता नित्यं जप्तव्यः पुरुषोत्तमः ॥
केशवं पुण्डरीकाक्षं पुष्काराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं भयेषु च ।
संग्रामाभिमुखं गच्छन्संस्मरेदपराजितम् ॥
पातालनरसिंहं च जलप्रतरणे स्मरेत् ।
चक्रिणं गदिनं चैव शार्ङ्गिणं खड्गिनं तथा ॥
क्षेमार्थं प्रवसन् राजा दिक्षु प्राच्यादिषु स्मरेत् ।
अजितं चाधिकं चैव सर्वं सर्वेश्वरं तथा ॥
संस्मरेत्पुरुषो भक्त्या व्यवहारेषु सर्वदा ।
सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ॥
यद्वाभिरोचते नाम तत्सर्वार्थेषु कीर्तयेत् ।
सर्वां सिद्धिमवाप्नोति नाम्नामेकार्थता यतः ॥
यं यं काममभिध्यायेत्तन्तमाप्नोत्यसंशयम् ॥ इति ।

अत्र "सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासौ" इत्यत्रेव सर्वफलार्थत्वं नाम्नां विधीयते। न चानुवादकत्वमाशङ्कनीयम्।अप्राप्तत्वेन तदसम्भवात्। अत्र नाम्नामैच्छिको विकल्पः तुल्यार्थत्वात् सर्वार्थत्वेऽपि न युगपत्सर्वफलप्राप्तिः फलस्योद्देश्यत्वेन तत्साहित्यस्याविवक्षितत्वात, युगपत्सर्वकामनासम्भवाच्च पापक्षयस्तु सर्वैः समुच्चीयते। अत एव स्वर्गफलार्थमनुष्ठितादपि ज्योतिष्टोमात् पापक्षयो जायत इति स्वीक्रिते। पापाक्षयमात्रकामेन तु भगवन्नाम्नः सकृदुच्चारणं कार्यम्।

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥

इतिस्मृतेः । परिकरबद्धशब्देन लक्षणया सर्वपापक्षय उच्यते । अक्षरद्वयमित्यभिधानान्नार्थज्ञानापेक्षेति गम्यते । न च—

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलपातकः ॥

इत्यभ्यासश्रवणान्न सकृन्नामकीर्तनं सर्वपापक्षहेतुरिति वाच्यम् । तस्यागामिपापापनोदनार्थत्वेन चोदनात् । सकृन्नामोच्चारणस्य अतीतानेकजन्मार्जितकामाकामकृतसर्वपापापनोदनार्थत्वेन चोदनात् । सकृन्नामोच्चारणेन अतीतानेकजन्मार्जितकामाकामकृतसर्वपापक्षयेऽपि पापवासनाऽनिवृत्त्या पुनः पापनुष्ठानसम्भवेन नरकपातावश्यंभावात्तन्निवृत्त्यर्थमभ्यासविधानम् । तेनाभ्यस्तेन पापवासनाविवृत्तोः पापाननुष्ठानान्नरकपापसम्भावनाऽपि 'क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति' ( अ० ६ श्लो० ३१ ) इतिभगवद्वचनात् । अथवा अभ्यासोऽन्ते भगवत्स्मरणार्थः, न पापक्षयार्थः--

अविलुप्तमतिश्चान्ते सम्प्राप्य स्मरणं हरेः ।
विष्णुलोकमवाप्नोति सत्यमेतन्मयोदितम् ॥
अन्ते (च) कृष्णस्मरणं भवतापत्रयापहम् ।

इतिस्मरणात् ।

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ( ८-७ )

इतिभगवद्वचनाच्च ।

तस्मात्सकृदुच्चरितेन भगवन्नाम्ना सर्वपापक्षयः, अभ्यासेन वासनानिवृत्तिः, अन्ते विष्णुस्मरणं चेति सिद्धम्।

ननु भगवन्नामोच्चारणेनानायाससाध्येन द्वादशाब्दादिनिवर्त्यानां कथं निवृत्तिः, निवृत्तौ वा तदुपदेशानर्थक्यम्। किञ्च अल्पे कर्मण्यल्पं फलं महति महत्फलं स्थानसामान्यात्। तदुक्तं भट्टैः

कर्मणामल्पमहतां फलानां च स्वगोचरे।
विभागस्थानसामान्यादविभागोऽपि चोदितः॥ इति।

'फलस्य कर्मनिष्पतेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्' ( अ०१-२-१७ ) इतिसूत्रेणैव साक्षाज्जैमिनिना कर्मानुरूपफलाभिधानाच्च। एवं च क्लेशलेशरहितं भगवन्नामकीर्त्तनं कथं सर्वपापक्षयकरमिति। मैवम्। अत्यल्पेनापि वह्निकणेन ग्रामादिसर्वदाहदर्शनात्, सिंहशिशुना षष्टिहायनसिन्धुरोपमर्ददर्शनात्, स्वल्पेनापि ( विषेण ) प्राणिनां प्राणहरणदर्शनात्, वचनस्यानतिशङ्कनीयत्वाच्च। श्रमस्याप्रयोजकत्वात्, अन्यथा तत्वज्ञानस्य सर्वकर्मनाशकत्वं न स्यात्। ब्रह्मात्माकारचित्तवृत्तौ श्रमलेशाभावात्साधनश्रमस्योभयत्रापि तुल्यत्वात्। न चेष्टापत्तिः, कायव्यूहस्य निराकरिष्यमाणत्वेन जन्मकोटिभिरपि कर्मणां भोगासम्भवादनिर्मोक्षप्रसङ्गात्, सुराबिन्दुपानस्य महापापत्वं स्यात्, ब्रह्मवध्यादाविव श्रमाभावात्, रहस्यमहापापादौ अघमर्षणसूक्तादिजपस्य प्रायश्चित्तत्वेन विधानं च न स्यात्, अतो न श्रम एव पापं हन्तीति वक्तुं शक्यम। किञ्च धर्माधर्मयोर्नरकस्वर्गयोर्वा न प्रत्यक्षानुमानादिप्रमाणं विद्यमानोपलम्भनत्वात्प्रत्यक्षस्य, तन्मूलत्वादितरेषाम नैवं श्रुतिस्तदनुसारिणी स्मृतिश्च, तदुक्ते चार्थे नोपपत्त्यपेक्षा। अतः सुखसेव्येन भगवान्नामोच्चारणेन सर्वपापक्षयः श्रूयमाणोऽसति बाधके प्रमाणेन न शक्योऽन्यथयितुम्। न च "फलस्य कर्मनिष्पतेः" इतिन्यायेन विरोधः। एकफलान्येव यत्र कर्माणि श्रुतानि फलेयत्ता तु श्रुतिवाक्यतो नावगता कर्मणां बह्वल्पायाससाध्यत्वं

नावगतं तद्विषयो न्यायः, न तु यत्र फलेयत्ता ज्ञाता तत्रायं न्यायः प्रसरति । वचनापेक्षया न्यायस्य दुर्बलत्वात् । न च द्वादशाब्दाद्युपदेशानर्थक्यम् । कर्मजडानां महायासद्रव्यसाध्यकर्मश्रद्धावतां भगवन्नामोच्चारणेऽप्रवृत्तेः द्वादशाब्दाद्युपदेशस्य तद्विषयत्वात् । अकृतपुण्यानां भगवन्नामोच्चारणासंभवात् । स्मृत्युक्तेनैव प्रायश्चितेन यथावदनुष्ठितेन तत्तन्यायनिवृत्तिः । श्रीभगवन्नाम्नि श्रद्धावतां पापिनामनुतापिनां भगवन्नामस्मरणमेव परमं प्रायश्चितम् । तदुक्तं विष्णुपुराणे—

प्रायश्चितान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
कृते पापेऽनुतापो वै यस्यः पुंसः प्रजायते ।
प्रायश्चितं तु तस्यैकं हरिसंस्मरणं परम् ॥
सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम् ।
पापराशिर्दहत्याशु तूलराशिमिवानलः ॥
क्षान्तिः कलेरघौघस्य नामसंकीर्त्तनं हरेः ॥
यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥

इत्यादिवचनैः शतजन्मार्जितं पापं भगवन्नाम नाशयतीति निश्चीयते, किं पुनरेकजन्मार्जितं पापं नाशयतीति । स्मरणं नामकीर्त्तनान्तर्भूतम् "यद्धि मनसा ध्यायति तद्वाचा वदति मनसा वा अग्रे संकल्पयतीत्यथ वाचा व्याहरति" इतिश्रुतेरिति शङ्करभगवत्पादाः । किं च किमाश्चर्यं श्रीहरिनाम कीर्त्तनेन पापक्षय इति । यतो भगवानात्मानं स्वनामकीर्त्तयतः ऋणिनं मन्यते ।

ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद् गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ इति ।

पाराशरोऽपि कैमुतिकन्यायेन विष्णुनाम्नः कीर्त्यमानात्सर्व-
पापक्षयमाह–'किञ्चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते' इति ।
अयमर्थः । यः स्वभक्तानां सविलासमज्ञानं हन्ति इच्छामात्रेण च
जगतो जन्मस्थितिभङ्गं करोति तस्याच्युतस्य कीर्त्तने पापक्षयो जायत
इति किमाश्चर्यमिति । तत्सिद्धं सकृदुच्चारितं श्रीभगवन्नाम सर्वदुरि-
तहरमिति श्रीभगवन्नामकीर्त्तनं कुर्वता अपराधाः सर्वथा परिह-
र्तव्याः । तदुक्तं पाद्मे-नारद उवाच—

योऽसौ भगवता प्रोक्तो धर्मव्यतिकरो नृणाम् ।
कथं तस्य विनाशः स्यादुच्यतां भगवत्प्रिय ॥

सनत्कुमार उवाच—

शृणु नारद गोविन्दप्रिय गोविन्दधर्मवित् ।
यत्पृष्टं लोकनिर्मुक्तिकारणं तमसः परात् ॥
सर्वाचारविवर्जिताः शठधियो व्रात्या जगद्वञ्चकाः ।
दम्भाहङ्कृतिपापपैशुनपराः पापान्त्यजा निष्ठुराः ॥
ये चान्ये धनदारपुत्रनिरताः सर्वाधमास्तेऽपि हि ।
श्रीगोविन्दपदारविन्दशरणाः शुद्धा भवन्ति द्विजाः ॥
तमपि देववरं करुणाकरं
स्थावरजङ्गममुक्तिकरं परम् ।
अतिचरन्त्यपराधपरा नरा
य इह तानवति ध्रुवतामिह ॥
सर्वापराधकरोऽपि मुच्यते हरिसंश्रयः ।
हरेरप्यपराधान्यः कुर्याद्द्विपदपांसनः ॥
नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः ।
नाम्नोऽपि सर्वसुहृदो ह्यपराधात्पतत्यधः ॥

नारद उवाच—

के तेऽपराधा विप्रेन्द्र नाम्नो भगवतः कृताः ।

२

विनिघ्नन्ति नृणां कृत्यं प्राकृतात्पालयन्ति च ॥

सनत्कुमार उवाच—

सतां निंदा नाम्नः परममपराधं वितनुते
यतः ख्यातिं यातं कथमु सहते तद्विगर्हाम् ।
शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं
धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः ॥

धिया—तत्वदृष्ट्या, व्यावहारिकभेदस्य, इतिहासपुराणयोः संप्रतिपन्नत्वात् ।

गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं
तथार्थवादो हरिनामकीर्त्तने ।
नाम्नो बलाद्यस्य च पापबुद्धिः
न विद्यते तस्य यमैर्विशुद्धिः ॥
धर्मव्रतत्यागहुतादिसर्व—
शुभक्रियासाम्यमपि प्रमादः ।
अश्रद्दधाने विमुखेऽप्यश्रृण्वति
यश्चोपदेशः स महापराधः ॥
श्रुत्वापि नाममाहात्म्यं यः प्रीतिरहितोऽधमः ।
अहं ममेति परमो नाम्नि सोऽप्यपराधकृत् ।
एवं नारदशङ्करेण कृपया मह्यं मुनीनां पुरः
प्रोक्तं नाम शुभावहं भगवतो वर्ज्यं सदा यत्नतः ।
यद्ज्ञात्वापि न वर्जयन्ति सहसा नाम्नोऽपराधान् दश
क्रुद्धां मातरमप्यभोजनपरां खिद्यन्ति ते बालवत् ॥
अपराधविनिर्मुक्तौ नाम्नि यत्नं समाचर ।
नाम्नैव तव देवर्षे सर्वं सेत्स्यति नान्यतः ॥

कृतापराधानां अपराधसमाधानमपि तत्रैवोक्तम्। नारदः—

सनत्कुमार प्रियसाहसानां
विवेकवैराग्यविवर्जितानाम् ।
देहान्नजायात्मजतत्पराणा-
मुक्तापराधाः प्रभवन्ति नो कथम् ॥

सनत्कुमारः—

नामापराधयुक्तानां नामान्येव हरन्त्यघम् ।
अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च ॥
नामैकं यस्य वाचि श्रवणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाऽशुद्धवर्णं व्यवहृतिरहितं तारयत्येव सत्यम् ।
तच्चेद्देहद्रविणजनदयालोभपाषण्डमध्ये ।
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र विप्र ॥
इदं रहस्यं परमं मया नारद शङ्करात् ।
श्रुतं सर्वाघहरणमपराधनिवर्त्तनम् ॥
देवविष्ण्वभिधानाद्येष्वपराधपरा नराः ।
तेषां वै जायते मुक्तिः पठणादेव नारद ॥

फलार्थं तु भगवन्नामकीर्त्तने आवृत्तिरपेक्ष्यते ।

तदुक्तं महाभारते—

प्रयोजयामास तदा नाम गुह्यमिदं मम ।
आनुपूर्व्येण विधिना केशवेति पुनः पुनः ।
स चक्षुष्मान्समभवद् गौतमश्चाभवत्ततः ॥ इति ।

यद्यपि काम्ये कर्मणि सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारात्सर्वाङ्गोपेतादेव काम्यकर्मणः फलं भवति न व्यङ्गात् । अनावश्यकत्वेन यथाशक्त्युपबन्धाभावात् । तथापि—

अदेशेऽकाले यद्दानमपात्रेभ्यश्च दीयते ।

असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ ( भ०गी० १७-२२)

इतिव्यासवचनाद् विकलादपि दानादेः विकलं फलं भवतीति निश्चीयते । श्रीविष्णुधर्मेऽपि—

उपवासादिना राज्यं प्राप्यते च यथा तथा ।

भ्रष्टैश्वर्या निर्धनाश्च भवन्ति पुरुषाः पुनः ॥

रूपन्तथोत्तमं प्राप्य व्रतवैकल्यदोषतः ।

काणाः खञ्जाश्च जायन्ते भवन्त्यन्धाश्च मानवाः ॥ इति ।

एवञ्च भगवन्नामकीर्त्तने साङ्गे सकलं फलं व्यङ्गे तु विकलं फलं भवति, यत्र वा फलं न दृश्यते तत्र कारीर्यादिवत्प्रतिबन्धकबाहुल्यं कल्पनीयमिति । न च न्यायविरोधः, न्यायस्य वचनापेक्षया दुर्बलत्वात् । यथावदानप्रयुक्तत्वात्पुरोडाशस्यावदाननाशे न्यायेन पुनः पुरोडाशः प्राप्नोति "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुः" इत्यादिवचनादाज्येन यागः क्रियते वचनस्य न्यायापेक्षया बलीयस्त्वादेवमिहापीति दिक् । (इति)सिद्धं भगवन्नामकीर्त्तनं सर्वपुरुषार्थसाधनमिति ।

श्रीमदाश्रमस्वामिरचिते वैष्णवकण्ठाभरणे

नाममाहात्म्यं समाप्तम् ।



मया वारं वारं जठरभरणाय प्रतिदिशं
प्रयातेन व्यर्थीकृतमहह जन्मैव सकलम् ॥
हृदिस्थोऽपि श्रीमानखिलपुरुषार्थैकनिलयः ।
दयोदारस्वामी न च गरुडगामी परिचितः ॥१॥





# प्रथमं परिशिष्टम् ।

## अथ प्रमाणतयोद्धृतवचनप्रतीकसंकलनम् ।

इति प्रमाणवचनसङ्कलनम्



# द्वितीयं परिशिष्टम् ।

## नाममाहात्म्यबोधकवचनानामकारादिक्रमेणानुक्रमणिका ।



इति नाममाहात्म्यबोधकानुक्रमणिका ।

# तृतीयं परिशिष्टम् ।

## प्रमाणतयोद्धृतग्रन्थादिनामस्थानप्रदर्शनम् ।



इति ग्रन्थादिनामस्थानप्रदर्शनम् ।

# अथ शुद्धाशुद्धबोधकपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठम् । | पङ्क्तिः । |
|---|---|---|---|
| स्तुति | श्रुति | ३ | १४ |
| संन्योग | संयोग | ३ | १४ |
| दुर्मिक्ष | दुर्भिक्ष | ४ | २५ |
| पापनु | पापानु | ६ | ११ |
| विवृत्ते: | निवृत्ते: | ६ | १२ |
| मट्टैः | भट्टैः | ७ | ३ |
| सूक्रा | सूक्ता | ७ | १८ |
| इछा | इच्छा | ८ | ३ |
| पठ | शठ | ८ | १३ |
| त्द्य | ह्य | ८ | २४ |
| निदा | निन्दा | १० | ३ |
| परम | प्रथम | १० | ३ |
| पठणा | पठना | ११ | १६ |

इति शुद्धाशुद्धबोधकपत्रम् ।





